निवर्त्यते । अथ परिसंख्या सर्पिषो न नियम इति । किमत्र युक्तम्
नियमविधिः । तत्र हि स्वार्थवृत्तिता शब्दस्य स्यात् । तैलव्युदासे
रार्थता कल्पेत । लक्षणा च स्यात् । तस्मान्नियमविधिरेव । नियम
च सत्यर्थात्तैलादिनिवृत्तिः । असुहितौ अतृप्ताविति । तदेतद
दृष्टार्थमुत धर्ममात्रमिति? । धर्ममात्रमिति ब्रूमः । कुतः । द्रव्यकाल
दिनियमात् । दृष्टार्थे हि यत्किञ्चित्स्यात् । तस्माद्धर्ममात्रमिति
दृष्टार्थं वा प्रसिद्धेस्तदर्थत्वात् । न ह्यदृष्टाय कश्चिद्भुङ्क्ते । यत्तु
द्रव्यादिनियम इति । कामं नियमाददृष्टपरिकल्पना प्राङ्मुखोऽन्नानि
भुञ्जीतेति वत् । न तु गम्यमानतृप्त्यपन्हवद्वारेणादृष्टपरिकल्पनामिति
प्रयोजनं सति सामर्थ्ये ऽश्नीयात् ॥ १० ॥

अन्तरेणापराग्नीगत्वा परेणाहवनीयं प्राङ्तिष्ठन्न-
ग्निमीक्षमाणोप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत
इदमहमिति वा ॥ ११ ॥

अन्तरेणापराग्न्योरिति षष्ठ्यां प्राप्तायां तदपवादोऽन्तरान्त
रेण युक्त इत्युपपदविभक्तिर्द्वितीया । प्राङ्तिष्ठन्निति शक्यमवक्तुम्
अपरेण व्यवस्थितस्याग्नीक्षणविधानसामर्थ्यात् । अग्निमीक्षमा
इत्यपि न वाच्यम् । मन्त्रलिङ्गादेव प्राप्तः । उक्तं च प्रदेश
न्तरे । आहवनीयमीक्षमाणस्तद्वचनत्वादिति । वक्तव्यं वा
रमन्त्रार्थत्वात् । तस्य च विलिङ्गत्वात् । प्राङ्मुखता अवाच्या
प्रोषितस्यापि दिङ्नियमो यथा स्यादिति । अपामुपस्पर्शनमाचम
लिङ्गात् । प्राङ्तिष्ठन्नप उपस्पृशतीति प्रकृत्य तेन पूतिरन्तरता
ध्या वा आपो मेध्यो भूत्वा व्रतमुपायानीति । आलम्भनमात्रं वा
चमनानुपदेशात्तस्य नैमित्तिकत्वात् । शब्दसामर्थ्याच्चाप उपस्पृश
तीलिङ्गमर्थवादमात्रं दीक्षास्नानवत् । व्रतमुपैति नियममुपगच्छ
ति । अग्ने व्रतपत इत्याहवनीयाग्निरुच्यते । न हि देवस्याग्नेरीक्ष
सम्भवति । तेन दार्षद्व्रतावभृथे विपरिणामः । ननु च समिष्टयजु
रन्ते प्रकृतौ चावभृथविधानात्तत्र च व्रतस्य प्रासङ्गिकत्वा
ग्रहणमिति चेत् । न । अतद्धर्मत्वात् । न हि समिष्टयजुरन्तत
ऽवभृथस्य धर्मः । तस्मान्न तदन्तएवावभृथः । तत्र न व्रतग्रहणेऽ

शब्दो विपरिणस्यत इति न तत् युरुक्तम् ॥ ११ ॥

## सत्यवाद्यतः ॥ १२ ॥

अत इत्यवाच्यम् । पाठादेव तत्सिद्धेः । स्यात्सम्बन्धज्ञापनार्थत्वात् । व्रतग्रहणोत्कर्षे सत्ययं नियमो यथोत्कृष्येतेति । अपरे त्वतः शब्दं हेत्वर्थं मन्यन्ते । ननु चैकमुपनयनसमकालमेव सत्यवदनमुत्तरेषां चैतद्विरोधीतीहापि प्राप्तम् । तथा परमाधानसमकालं न वा आहिताग्निनानृतं वदितव्यमिति । अनृताच्चिद्व्यपनोदेति सूत्रितम् ॥ १२ ॥

इदमन्यत् सत्यवाद्यत इत्यस्य विषयोपदर्शनायाह—

## कर्माङ्गमुत्तरे सत्यवदनमिति ॥ १३ ॥

पूर्वं तु पुरुषाङ्गम् । यदिदमुत्तरदेशे तत्कर्माङ्गमिति । को विशेष इति चेत् । कर्माङ्गे प्रायश्चित्तसमुच्चयः । पुरुषार्थापचारे स्मार्त्तमेव । श्रौतापचारे श्रौतम् । नन्विह द्वे पुरुषार्थे श्रौतं स्मार्त्तं च । तत्र श्रौतापचारे कृते प्रायश्चित्तसमुच्चय इह प्राप्नोत्येव । पुनरारम्भो व्यर्थ इति । सत्यमेवं कर्माङ्गे कर्मगतविशेषनिबन्धनं विशिष्टं प्रायश्चित्तं यथास्यादिति । तच्चार्ग्वेदिके भूरिति याजुर्वेदिके भुव इति । हौतृकपदार्थानुष्ठानकाले सत्यवदनापचारे हौतृकं श्रौतं आध्वर्यवं च । स्मार्त्तं च । केचित्त्वाधानकालानृतवदनप्रतिषेधमनुवादं मन्यन्ते । तथा हि न वा आहिताग्निनानृतं वदित्यव्यम् । न च वदन् जातु नानृतम्वदेदित्याह ॥ १३ ॥

## वृक्षारण्यौषधीनामश्नीयाद्वा ॥ १४ ॥

इदमवसरप्राप्तं सायाशनमुच्यते । आरण्यवृक्षाणामारण्योषधीनां वा श्नीयाद्वा न वेतिविकल्पः । केचिदारण्यशब्दमोषधिविशेषणं मन्यन्ते । निर्देशसामर्थ्यान्न ह्यारण्यशब्दो वृक्षपदात्पूर्वः । अतो न तदुपसर्जनमिति । न वा अविशेषेण श्रवणात् । स वा आरण्यमेवाश्नीयादिति हि प्रकृत्य या चारण्या ओषधयो द्वावृक्षमित्याह । सूत्रस्य च तन्मूलत्वादतन्त्रो निर्देश इति । सामर्थ्यासिद्धत्वात् विकल्पोऽत्राच्य इति चेत् । न, अ-

वधारणार्थत्वात् । अवधार्यं हि वैकल्पिके कर्मणि प्रवृत्तिर्यो
आरण्यगुणविधित्सया वेदमुच्यते ॥ १४ ॥

## आहवनीयगृहशाय्यधो गार्हपत्यस्य वा ॥ १५ ॥

विकल्पेन हि श्रवणमत्र । तत्रायमधः शब्दः किं खट्वादि
धकृतुताऽऽस्तरणस्यापीति? । नास्तरणानिषेधकः । तत्रापि प्रयोग
त्ययाऽध्यामधः सुप्तावयमिति । कचिच्च स्थण्डिलशायीत्यतो ना
रणस्य निषेधः । अधःशयीताधस्तादिव हि श्रेयस उपचार इ
लिङ्गात् ॥ १५ ॥

## सद्यो वा प्रातः ॥ १६ ॥

पूर्वामुत्तरां वोपवसेदिति हि पूर्वमुक्तम् । तत्र सद्यो
तीयत्युच्यमाने तयोरेवान्यतरत्र यागः प्राप्नोति । उत्तरोपवा
पक्षे च द्वितीयायाम् । तन्माभूदित्यतः प्रातर्ग्रहणम् । अथाक्रियमा
पि प्रातर्ग्रहणं अङ्गानां प्रधानकालत्वस्य न्याय्यत्वात्पूर्वस्याम
प्तिरेव यागस्येति । उच्यते । एवं सति यथोत्तरस्यां साङ्ग
प्तिरेवमुत्तरोपवासपक्षाऽवलम्बनद्वारेणोत्तरोत्तरस्यामपि प्राप्नु
त् । तन्निरासार्थं प्रातर्ग्रहणम् । अस्तु तथेति चेत् । न, पौ
मास्यां यागविधानसामर्थ्यात् । एवं उत्तरस्यामप्यप्राप्तिरि
चेत् । स्यादारम्भसामर्थ्यात् पूर्वामुत्तरां वोपवसेदिति । उ
रापि हि पौर्णमासीप्रतिपदिति प्रतिपादितम् । तेन सद्यो वा प्रा
प्रातरिति यदा प्रातस्तदा सद्य इति इतिपौर्णमासी द्वितीया
निरस्ते भवतः । सूत्रारम्भसामर्थ्यादप्ययमर्थोवसीयते । पक्षा
यद्यद्धविरिति । हविः पक्षादिना विशेष्यते तच्चैवमुपपद्यते । अथे
रथानैकान्तिकत्वादविशेषणं स्यात् । तस्मादुत्तरस्यामेव या
इति साधूच्यते १ ॥ १६ ॥

---

१ याज्ञिकदेवभाष्ये त्वत्र सूत्रभेदो दृश्यते । तथा हि "
द्योवा " पौर्णमासे यदूद्व्यहकर्त्तव्यमुक्तं तदेकस्यामहन्यग्न्यन्वा
नादि कर्मापवर्गान्तं भवति । " प्रातः " अस्मिन् पक्षे प्रातः
तिपद्दिन एव सर्वमग्न्यन्वाधानादि कर्मापवर्गान्तं कर्तव्यं न पू
र्युरग्न्यन्वाधानदिने प्रतिपदः प्रधानकालत्वात् अङ्गानां प्रधानका

अग्निहोत्रं हुत्वा ब्रह्माणं वृणीते ब्रह्मिष्ठं भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इति ॥ १७ ॥

प्रातरित्यनुवर्त्तमाने अग्निहोत्रं हुत्वेत्युक्ते तत्प्रतिपत्तिर्मा भूत् सायमग्निहोत्रमिति । ततः अहनि कर्मसाकल्याद्रात्रौ चाविधानात् । अग्निहोत्रग्रहणं च इहार्थाभावादमावास्या विषयम् । तत्र हि वचनम् । उदिते पौर्णमासस्य तन्त्रं प्रक्रमियादनुदिते अमावास्यस्येति । अतो अग्निहोत्रग्रहणमानन्तर्यार्थम् । ब्रह्मिष्ठमिति च पदार्थसतत्त्वोपजातावबोधेन । न हि परमात्माख्यब्रह्मसतत्त्वावबोधोत्रोपयुज्यते १ ॥ १७ ॥

वृतो जपत्यहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्भूर्भुवः स्वर्देवसवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे

---

त्वस्य न्याय्यत्वात् । तत्र च व्रतोपायनीयाशनारण्याशनान्यतरागारशयनानि न भवन्ति, उक्तकालाभावात् । रागप्राप्तेष्वेवैतेषु द्रव्यादिनियममात्रविधानाच्च । न हि रागतस्तदानीमशनादीनि प्राप्नुवन्ति । अन्यद्वपनादि सर्वं भवत्येव ।

व्यवस्थितविकल्पोयमिति केचित् । तथाच कात्यायनः—

"सन्धिश्चेत्सङ्गवादूर्ध्वं प्राक् पर्यावर्त्तनाद्रवेः-
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः" इति ।

१ वरणं चाचारादेवं कर्तव्यम् । वितानस्योत्तरतः प्राङ्मुखोपविष्टं ब्रह्माणमुदङ्मुखोपविष्टो यजमानः स्फ्यं सव्येन गृहीत्वा दक्षिणेन यवसहितेन ब्रह्मणो जान्वालभ्य वृणीते ? अमुकगोत्र अमुकशर्मन् पौर्णमासेष्ट्या वयं यक्ष्यामहे तत्र त्वं ब्रह्मा भवेति, अत्र च भूपत इत्यादिमन्त्रः, । एतच्च वरणमप्रवृत्तस्य प्रवर्तनम् । तेन पवमानेष्टिदीक्षणीयादौ न भवतीति ।

त्रिष्टुब् जगत्यै जगत्यनुष्टुभे ऽनुष्टुप्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम् ॥ १८ ॥

वृतो जपति ब्रह्मा जपतीति यावदुक्तम्। अथवा यदा वृतः मस्तेन मन्त्रेण भवति तदा जपति कर्तृभेदाद्यौगपद्यं मा भूदिति॥

वाचस्पते यज्ञं गोपायेत्याह ॥ १९ ॥

सामर्थ्याद्यजमानः । स हि वरणेनाऽनत्या च यज्ञगोपा नियोक्तुं समर्थो नान्यः । वाचस्पतित्वं च स्तोतुं ब्रह्मण्यध्यारोप्य वाचस्पते ब्रह्मन् यज्ञं गोपायेति । यदपि च कण्वानां देवसवि त्युक्त्वा वाचस्पते यज्ञं गोपायेत्याहेति पठ्यते । तदपि न समान र्तृकार्थम् । पूर्वकालता मात्रे हि क्त्वाशब्दः । समानकर्तृकतायाम मञ्जस्यं स्यात् । न हि ब्रह्मात्मानमेव वाचस्पते इति सम्बोधयां अथाधिष्ठात्री देवतोच्यते । तत्रापि नियोगाभावाददृष्टार्थता स्या तस्माद्यथोपवर्णित एवार्थः । स चायं प्रैषो नियोगार्थत्वादस वरणो प्रवर्त्तते । यथा ज्योतिष्टोमे दीक्षणीयादिष्वाधाने चेष्टिषु थमाधाने वरणाभाव इति चेत्स्यात् प्रवृत्तिदर्शनात्, चत्वार ऋत्वि प्राश्नन्तीति।ब्रह्मौदनाभावे ऽस्तु वरणमिति चेन्न। तत्रापि दर्शनादग्न्य धेये ब्रह्मा सामानि गायतीति। तेन प्रतिपन्नब्रह्मत्वस्य वरणं क्रिय णमप्राकृतप्रयोजनं स्यात् । वरणविशेषनियमार्थमस्तु प्रवृत्ति चेत् । न, नियमस्य क्रियापुरःसरत्वात् । सत्यां हि क्रियायां यमानुग्रहो न नियमानुग्रहाय क्रियाप्रवृत्तिः । यो हि पण्डितं मन्य एवं कुर्यात्स प्राङ्मुखोऽन्नानि भुञ्जीतेति भोजननियमानुग्रहाय त पि सन् भुञ्जीतापि । यश्च ज्योतिष्टोमे ब्रह्मवरणनिषेधो न्यायमूलः इहापि प्रवर्त्तत एव ॥ १९ ॥

अपरेण वाहवनीयं दक्षिणातिक्रामति ॥ २० ॥

उत्तरत उपचारो यज्ञ इति वरणमुत्तरतः । दक्षिणतो ह्मयजमानयोरासने इति । गमनं विकल्पः । शास्त्रस र्थ्यात् ॥ २० ॥

अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योस्म-
त्पाकतर इति ब्रह्मसदनमीक्षते ॥ २१ ॥

तच्चैतत्कौशं स्यात्तृणनिरसनोपदेशात्, प्रसिद्धेश्च। न वा नियमशासनाभावात् । तृणनिरसनं तु कुशास्तृतत्वादासनस्य । तत्कुतः शिष्टानुस्मरणात्प्रसिद्धिरविशिष्टा । तस्माद्यथा प्रसिद्धमवेधविद्धमासनमिति ॥ २१ ॥

ब्रह्मसदनात्तृणं निरस्यति१ निरस्तः पाप्मा सह
तेन यं द्विष्म इति ॥ २२ ॥

स चायमासनसंस्कारस्तेन पशुपुरोडाशे आपशुपरिसमाप्तेः संस्कृतत्वादासनस्य पुनर्न प्रवर्त्तते ॥ २२ ॥

इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सविता
तदग्नये प्रब्रवीमि तद्वायवे तत्पृथिव्या
इति ॥ २३ ॥

ब्रह्मसदन आहवनीयमभिमुख२ उपविशति॥२४॥

तदग्नये प्रब्रवीमीत्यग्निशब्दो देवता वचनः स्यात्प्रकृतत्वात् । न वा वायुना समुच्चारणात् । तस्य चाप्रकृतत्वात् । तस्माद्देवतान्तरवचनः । प्रयोजनम् सौर्यादावविपरिणामः । ब्रह्मसदनग्रहणं गुणार्थं प्रकृतत्वादेव । को गुण इति चेदाहवनीयमभिमुख इति ॥ २३ ॥ २४ ॥

---

१ नैर्ऋत्यां दिशि प्रक्षिपति शाङ्खायने दर्शनात् । तत्र "समानं होत्रा तृणा निरसनम्" इत्युक्तम् । होतुश्च पठितम् "होतृषदनाच्छुष्कं तृणमुभयतः प्रतिच्छिद्य दक्षिणापरमवान्तरदेशं निरस्यति" इति, एवञ्च होत्रासाम्यसम्पादनाय तथैव कर्तव्यमिति भावः ।

२ छन्दोग सूत्रे तु "परिध्योर्वा सन्धि स्रुचां वाग्राणि उत्करं वाभिमुख" इति पठितम् ।

वाग्यत आनुयाजप्रसवात् ॥ २५ ॥

यतवाग्ब्रह्मा भवत्यनुयाजप्रसवं यावत् । ॥ २५ ॥

भागपरिहरणादि वा ॥ २६ ॥

सा चैषाऽवधारणा अथास्मै ब्रह्मभागं पर्याहरन्तीति
त्य स वै वाचं यम एव स्याद् ब्रह्मन् प्रस्थास्यामीत्येतस्माद्ध
इति आम्नायते । पूर्वमविशेषादध्यवसितम् । पाठक्रमाद्वि
ध्यवसानम् । लिङ्गाच्च, विवृहन्ति वा एते यज्ञं क्षण्वन्ति ये मध्ये
स्य पाकयज्ञिययेडया चरन्तीति हेतुत्वेन वाग्यमनस्येहा
निर्दिशति । तस्माद्भागपरिहरणाद्येव । स चायं पदार्थधर्मो य
क्त्वे हि सत्यप्रमादात्कृताकृतप्रत्यवेक्षणमाचरति ॥ २६ ॥

आवृता ऽवषट्कारासु ॥ २७ ॥

अवषट्कारास्वाहुतिषु१ ब्रह्माऽवृतोत्पाद्यते । ताश्चैता अग्नि
त्राहुतयो वषट्काराः । अस्ति हि तत्रैकर्त्विक्त्वेपि सति प्रायश्चित्त
तया ब्रह्मणः प्राप्तिः । तेन निमित्ताद्व्याहृतिहोम आपन्ने सति आ
क्रियामात्रेण ब्रह्मोत्पद्यत इति । क्रियया हि कारकमाक्षिप्यते । लि
च्च । अथ हैतामिन्द्र ऋषये प्रायश्चित्तिमुवाचाग्निहोत्रादग्नआम
उत्कादिति । न चैतदेवमेकर्त्विक्त्वात् । एवं हि श्रूयते एकर्त्विजमा
होत्रमिति । अङ्गप्रधानपदार्थाभिनिर्वृत्तिरेकेनर्त्विजा कर्त्तव्ये
ननु नैमित्तिकार्थतया द्वितीयोपि भविष्यति । नेत्युच्यते । न हि
मित्तिकस्य ब्रह्माक्षेपसामर्थ्यमस्ति । भिन्ने जुहोतीति होममात्र एव
धेर्यापरपर्यवसानं वाक्यान्तरपरिप्राप्त इति चेत् । यदेव त्रय्यै
द्यायै शुक्रं तेन ब्रह्मत्वमित्येवमादिना व्याहृतिहोमे ब्रह्मसम्बन्धवि
नम् । तेन यत्र व्याहृतयस्तत्र ब्रह्मणा भवितव्यम् । नैतदेवम् ।
ह्येतदन्यत्राचरितार्थं स्यात्ततः कदाचित्स्यादपि । अस्ति ह्यस्य च
तार्थत्वं दर्शपूर्णमासादौ । तेनाग्निहोत्रे नान्यथानुपपत्त्या ब्रह्मा
शक्यत इति । एकर्त्विक्त्वविरोधाच्च । न चात्र क्रिया ब्रह्माणमन्त
न सम्भवति । कर्त्रन्तरविधानात् । अस्ति ह्यत्राध्वर्य्वाख्यं कर्त्रन्त
तेनापि न तदाक्षेपः । यच्चोक्तमग्निहोत्रादग्नआमहत उत्कादि

१ ताश्च पूर्णाहुतियूपाहुतिषड्ढोत्राहुतिसावित्राहुत्याद्याः ।

सोपि चतुस्त्रिंशद्धोमविषयोर्थवादः । अस्तु तर्हि दर्विहोमविषयता-स्य सूत्रस्य । दर्विहोमाहुतयो ऽवषट्काराः तासां हि पौर्णमास-विध्यन्तग्राहित्वेनोचितो वषट्कारः । स्वाहाकाराम्नानात्पुनर्निवृ-त्तिः । तदभावे ऽन्वाख्यानमुपपद्यते । तदेतदनुपपन्नम् । तत्र हि प्राप्त एव ब्रह्मा मन्त्ररहिता च क्रिया ब्रह्मवरणादिका तूष्णीमर्थ लुप्ता इति । पूर्णाहुतिविध्यन्तग्राहिहोमविषयता तर्ह्यस्तु अस्य सूत्रस्य । ता अपि ह्यवषट्कारा इति । एतदपि नोपपद्यते । अग्निहोत्रन्याय-सालक्षण्यादनुदूतृताभ्यस्तमयाहुतौ पूर्णाहुतिका धर्मा विहितास्त आचार्येण पूर्णाहुत्यामुपसंहृत्यान्यत्रातिदिष्टाः । अतस्तत्रापि ब्रह्मणः प्राप्त्यभाव एव । एवं चेदिहार्थमेव सूत्रमस्तु । इह हि प्राग्ब्रह्मवर-णाद्व्याहृतिहोमनिमित्ते सति तदर्थं ब्रह्मवरणापकर्षो न्याय्यः । अङ्ग-प्रधानार्थत्वाद्ब्रह्मणः । तदर्थमिदं सूत्रं आवृताऽवषट्का-रासु । आवृता क्रियया । समन्त्रिकाचासौ क्रिया न्यायतः प्राप्नोति । ननु चान्यत्राचार्येणायमावृच्छ-ब्दो मन्त्ररहितक्रियाविषयः प्रयुक्तः । मृदा सहांसौ करोत्यावृते-ति । सत्यमेवं मृदा सहांसौ करोतीयतैव समन्त्रिका क्रिया प्रा-प्ता तत्रावृच्छब्दो मन्त्रनिवृत्तिपर एव । तन्निवृत्तिश्च वाचनिकी । एतयैवावृनुपहरन्यजुरिति । अतो ब्रह्मवरणापकर्षार्थमेतत् । वाच-स्पतिप्रैषस्तु स्वकालीन एव व्याहृतीनामतदङ्गत्वात् । अतदङ्गता च प्रकरणव्यवच्छेदात् । शक्यन्ते चावषट्कारा व्याहृतयो वक्तुम् । उचितत्वाद्वषट्कारस्य । याज्याकार्ये हि तासामाम्नानमस्ति । यदि-याज्यां पुरोनुवाक्यां वा न विन्देद्व्याहृतीरेव याज्यायाः पुरोनुवा-क्याया स्वस्थाने कुर्यादिति । तेनेह वषट्काराभावे अवषट्कारा व्याहृतय उच्यन्ते ॥ २७ ॥

अत्र वा वृतोपायनम् ॥ २८ ॥

शास्त्रस्य तुल्यत्वात् ॥ २८ ॥

व्याहृत्य वैष्णवं मन्त्रं जपेत् ॥ २९ ॥

वाग्यत आनुयाजप्रसवादिति वाग्यमे सति यद्यनुव्यवहर-ति तदा वैष्णवं मन्त्रंजपेत् ॥ २९ ॥

अधिकारमुपजीवन्नाह—

अध्वर्युश्च ॥ ३० ॥

हविर्ग्रहणकाले वाग्यमने । तुल्यं हि शास्त्रमुभयोः । यदि पुरा मानुषीं वाचं व्याहरेत्ततो वैष्णवीमृचं वा यजुर्वा अ दिति । यजमानस्य त्वनाम्नानादाध्वर्यवमेव । केचित्तु च श यजमानस्य दीक्षाकालवाग्यमापचारे वैष्णवमिच्छन्ति । तत्रापि स्नायते वा यद्वाचंयमोऽप्रनत्यव्याहरतीति । स च म प्राकरणिकः स्यात् । प्रकरणादेवसामान्यसम्बन्धावगतेर्विशेष षयत्वे सति वाच्यस्य लाघवं । इतरथा ह्यप्रकृत उपादीय ने सामान्यसम्बन्धो विशेषसम्बन्धश्चेति गौरवंस्यात् ॥ ३०

प्रणय यज्ञं देवता वर्धयत्वं नाकस्य पृष्ठे यजमानो अ सप्तऋषीणाᳫं सुकृतां यत्र लोकस्तत्रेमं यज्ञं यज-मानं च धेह्योम् प्रणयेति प्रणीताः प्रसौति ॥ ३१ ॥

प्रणययज्ञमित्यनेन मन्त्रेण प्रणीताः प्रणीयमाना अनुजा ति ॐ प्रणयेत्यस्य प्रसवार्थत्वातः पुरस्ताज्जपः । प्रयोजना शुप्रयोगः । अत्र पुनर्लोणमध्यमपुरुषैकवचनाविशेषेपि सति मृग्यो शेषः। अयं च मन्त्रोनेकयजमानके कर्मणि१ यजमानाः सन्तु यज नांश्च धेहीति विपरिणस्यते । द्वित्वेपि यजमानौ स्तां यजमानौ धेहीति च ॥ ३१ ॥

एवमामन्त्रित ॐकारेण प्रोक्ष यज्ञमिति हवि-षीध्माबर्हिषोश्च ॥ ३२ ॥

प्रोक्षणं प्रसौति। एवमामन्त्रित इत्यामन्त्रणविधानं ब्रह्मन् इ प्रोक्षिष्यामीत्येवमादिलाभार्थम्।न हि तत्र प्रणीताप्रणयनवदाम्ना एवमोङ्कारेणेति, ॐकारपूर्वकेणार्थसरूपेण वचसेति यावत् ॥ ३२

---

१ अहीनैन्द्राग्नकुलायसत्त्वगणयागादौ ।

बृहस्पते परिगृहाण वेदिꣳ सुगावो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथताꣳसाध्वन्तर्हिꣳ स्नापृथिवी देवी देव्यस्त्विति वेदिं परिगृह्णन्तम् ॥ ३३ ॥

प्रसौतीत्यनुवर्त्तते ॥ ३३ ॥

प्रजापतेनुब्रूहि यज्ञमिति सामिधेनीरनुवक्ष्यन्तम् ॥३४॥

होतारं प्रसौति ॥ ३४ ॥

देवता वर्द्धयत्वमिति सर्वत्रानुषजति१ ॥ ३५ ॥

अनुषङ्गश्च लाघवार्थः । अत्र च प्रोक्षणपरिग्रहेषु अध्वर्युपरं वेदिपरं च वरुणप्रघासेषु वचनमूह्यते । यजमानपरं चानेकयजमानके ॥ ३५ ॥

मित्रस्य त्वा चक्षुषा प्रतीक्ष इति प्राशित्रं २ प्रतीक्षते ॥ ३६ ॥

देवस्यत्वेति प्रगृह्णाति ॥ ३७ ॥

स पात्रं प्रासिद्धेः सादनोपदेशात् पुनरादानसामर्थ्याच्च ॥ ३७ ॥

३पृथिव्यास्त्वेतिसादयत्यपोह्य बर्हीꣳषि ॥ ३८ ॥

---

१ पूर्वोक्तेषु प्रोक्ष यज्ञमित्यादिकेषु सर्वेष्वपि मन्त्रेषु 'देवता-वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु सप्तऋषीणाꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानश्च धेहीति' मन्त्रमनुषजति ।

२ प्राशित्रं ब्रह्मणो भागः, यवमात्रं पिप्पलमात्रं वा ।

३ ब्रह्मा तत्प्रातिगृह्य वेदेर्दक्षिणांसदेशे स्तृतानि बर्हींषि अपसार्य प्राग्दण्डं सादयति । आश्वलायनादिसूत्रेषु तद्दर्शनात् ।

पुनरादाय देवस्यत्वेत्यनामिकाङ्गुष्ठाभ्यामग्नेष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन्नत्र चेत् ॥ ३९ ॥

पुनरादानं च द्रव्यमात्रस्य प्राशनार्थत्वात् । अतश्च आस॰ तेपि भविष्यति । अनामिकाङ्गुष्ठाभ्यामादायाग्नेष्ट्वेत्यनेन मन्त्रेण प्रा॰ ति । चेच्छब्दो विकल्पार्थः । अत्र चेत्प्राश्नाति पुनरादाय प्राश्ना॰ अथोपरिष्टात्ततो ॥ ३९ ॥

निदधाति वा ऽसदेशे ॥ ४० ॥

पूर्वमविशेषेणाभिहितं विशेषप्रतिपिपादयिषयाऽत्र ॰ र्वचनम् ॥ ४० ॥

प्रक्षाल्य पात्रं नाभिमालभते या अप्स्वन्तर्देवतास्ता इ॰ ऽ शमयन्तु स्वाहा कृतं जठरमिन्द्रस्य गच्छ घसिन॰ मे मासं पृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामीति ॥ ४१ ॥

प्रक्षालनंच कार्यसम्बन्धाविशेषाद्द्वयोरपि पात्रयोः । ए॰ चनं तु जात्यपेक्षं । ननु चैकमेवैतत्पात्रं प्रक्षाल्य पात्रमित्येकवचना॰ शात् । तथा तूष्णीं प्राशित्रहरणमिति । द्वे वा स्यातां प्रतिपत्तिद॰ त् । कर्णयोः प्राशित्रहरणे इतीतरज्जात्यपेक्षयेत्युक्तम् ॥ ४१ ॥

एतं त इति समिदामन्त्रितः प्रसौति ॥ ४२ ॥

समित्सम्बन्धादामन्त्रणं समिच्छब्देनोच्यते । अथवा स॰ च्छब्देन तादर्थ्यादनुयाजा उच्यन्ते । अनुयाजार्थमामन्त्रित प॰ इत्यनेन मन्त्रेणानुजानाति । यज्ञपतिशब्दश्च सत्रे विपरिणम्यते ॰ ज्ञपतिसम्बद्धवचनसंस्कारपरिलोपः कस्य चिन्माभूदिति ॥ ४२

प्रतिष्ठेति ब्रूयाद्वा ॥ ४३ ॥

स यदि कामयेत ब्रूयात्प्रतिष्ठेति वचनात् । केचित्प्रा॰ क्रियापदात्पदान्तरमध्याहरन्ति सामर्थ्यात् । तत्पुनर्युक्तमयुक्तं ॰

विचारणीयम् । प्रतिष्ठतमिति च वरुणप्रघासेषु विपरिणामः ॥ ४३ ॥

कर्मापवर्गे समिधमादधाति जुहोत्युपतिष्ठते वा नमः कृताय कर्मणे अकृताय कर्मणे नमः अयाड् यज्ञं जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य सन्व॒न् सनि॒ं सुविमुचाविमुञ्च धेह्यस्मभ्यं द्रविणं जातवेदः स्वाहेति यथेतमेत्य ॥ ४४ ॥

अपवर्गः समाप्तिः१। यथेतमेत्येति२ परिभाषितत्वादवाच्यमिति चेत् । अतीत्य निःक्रमणामिति । नेदमर्थेनाऽप्राप्तेः । तत्रस्थस्यापि हि समिदाधानादि न विरुध्यते । स्वाहाकारास्नानं च उपस्थानसमिदाधानार्थम् । होमे ह्यसमाम्नातोऽपि प्राप्नुयादेव । स्वाहाकारः सर्वत्रेत्यनेन । स चायं पदार्थो यावदुक्तान्तापच्छिन्नादिषु निवर्त्तते ॥ ४४ ॥

एतद् ब्रह्मत्वमिष्टिपश्वोः ॥ ४५ ॥

एतद्ब्रह्मत्वमधिकारादिहोक्तम् । तदिष्टिपशुविषयस्प्रत्येतव्यम् । इष्टिग्रहणं प्रकृतत्वादकार्यम् । पशुग्रहणं च चोदकपरिप्रापितत्वात्कर्त्तव्यं वा पशुग्रहणम् । ब्रह्मानुज्ञाते प्रोक्षणं यथा स्यादिति न हि तत्र सान्नाय्यविकारत्वात् प्रोक्षणमस्ति । इष्टिग्रहणं तर्हि न कर्त्तव्यम् । न वा कार्यं वाक्याद्धि पश्वर्थतैव ब्रह्मत्वस्य स्यात् । तन्माभूदितीष्टिग्रहणम् । ब्रह्मवरणाधिकारे तत्प्रसङ्गमुपजीवता यावद्ब्रह्मत्वं तत्सर्वमभिहितं अतः प्रणयनाद्युच्यते ॥ ४५ ॥

---

१ ब्राह्मणतर्पणान्तम् । तस्मिन् इत्यर्थः ।

२ यथा येन क्रमेण इतं गतं आहवनीयस्य पूर्वेणापरेण वा तथैव प्रत्य आगत्य आहवनीये समिदाधानहोमोपस्थानाद्यन्यतमं करोति । होमपक्षे ' इदं जातवेदसे ' इति त्यागमात्रमाधिकमिति भावः ।

गार्हपत्यमुत्तरेणोदपात्रं निधायालभते भूतस्त्वा भूतकरिष्यामीति ॥ ४६ ॥

गार्हपत्यमित्युपपदविभक्तिः षष्ठ्यपवादो द्वितीया । उदपा उदकस्य पात्रम् । उदकस्योदादेशः । तच्चाविशेषेपि सति चतु स्यात् । चमसेनापः प्रणयतीति । स च चतुरस्रः प्रसिद्धः । लि च । चमसं प्रकृत्य चतुः स्राक्तिना चतस्रो वै दिश इत्याम्नायते । प्रकारप्रस्थानात् च । चमसवत् स्रुवेणेति । आलम्भ उदकस्य स त्तत्संस्काराभिप्रवृत्तेः । पात्रस्य वा । तदुपदेशात्तत्संस्कारतश्च त म्बन्धिद्वारेण इडांपहवे होत्रत्वारम्भणवत् । प्रयोजनं प्रणीताक पन्नयोर्दधिपयसोरविपरिणामः । उदकालम्भे हि भूतस्त्वा भूतक ष्यामीति त्वाशब्दस्तद्विषयः स्यात् । तत्र द्रव्यद्वित्वे वि रिणाम्येत ॥ ४६ ॥

ब्रह्मन्नपः[१] प्रणेष्यामि यजमान वाचं यच्छेत्याह ॥ ४७ ॥

ब्रह्मन्नपः प्रणेष्यामीति ब्रह्मानुज्ञाप्रार्थनं ब्रह्मेत्यृत्विग्विशे स च यद्यपि वरणभरणनिमित्तस्तथापि तु ब्रह्मत्वं कर्त्तर्युप ते । प्रयोजनं तु सत्त्रे ऽविपरिणामः । कुण्डपायिनामयने च मै रुणे ब्रह्मत्वं कुर्वंति । यजमान वाचं यच्छेत्यनेकयजमानके य

---

१ यदा च प्रणीतानां सर्वार्थत्वं संयवनार्थत्वं वा तदा या कर्मणि चरुश्रपणार्थं पयो घृतं वा विहितम्; यथा 'वैश्वदेव पयसि वा' इति, 'घृते चरुरादित्येभ्य' इति च, तत्र पयो घृ च प्रणयनं दध्नश्च मन्थाद्यर्थं कर्तव्यम्, तत्र ब्रह्मन् अप्पयांसि घृतानि अब्दधिनी प्रणेष्यामित्यूहः । पित्र्यायामपि प्रणयना मेव निवान्यां दुग्ध्वा तद्दुग्धस्य प्रणयनं कर्त्तव्यम' अत्र नै मते प्रणीताः संयवनार्था एव, कर्काचार्याणां मते सर्वार्था एव, रेषामदृष्टार्था एवेति तत्त्वम् ।

विपरिणम्यते । स चायं वाग्यमः पदार्थधर्मत्वादसत्यपि प्रणयने प्रवर्त्तत इति । प्रैषश्च तादर्थ्यात् ॥ ४७ ॥

## अनुज्ञात उत्तरेणाऽहवनीयꣳ सम्प्रतिनिदधाति कस्त्वेति ॥ ४८ ॥

सामर्थ्यपरिप्रापितत्वादनुज्ञात इत्यवाच्यम् । न वा प्रैषप्रैषार्थयोरानन्तर्यव्युदासार्थत्वाद्यजमान वाचं यच्छेत्यनन्तरं यथा स्यादिति । पाठादेव तत्प्राप्तिरिति चेत् । न प्रैषसमनन्तरं तदर्थानुष्ठानं न्याय्यमिति । सम्प्रतिशब्दो ऽनन्तिकानतिदूरविषयस्तानातिहृत्य सादयेन्नो अनाप्ताः सादयेदिति वचनात् । निधाने मन्त्रः स्यात्तदुपदेशात् । निदधाति कस्त्वेति । श्रुतिविरोधान्नेति चेत् । स प्रणयति कस्त्वा युनक्तीति । निधाने वा प्रणयनस्य तदर्थत्वात्तस्मादुसम्प्रत्येवोत्तरेणाहवनीयं प्रणयतीत्युपसंहारात् । शाखान्तरे तु स्पष्टतरः पाठः स निदधाति कस्त्वेति । त्वा शब्दो द्रव्यपरत्वाद्द्रव्यबहुत्वेऽपि पयो दधिघृतादौ विपरिणम्यते । न वाऽन्यायनिगदत्वादपः प्रणयतीति हि बहुवचनान्तोपदेशः । त्वाशब्दश्चैकवचनान्तस्तस्मादनूह इति ॥ ४८ ॥

## नान्तरेणगच्छेयुः ॥ ४९ ॥

प्रकृताऽप्रकृतयोरुपदेशात् लिङ्गाच्च नेनन्मिथुनं चर्यमाणमन्तरेण सञ्चरानिति । प्रयोजनं सर्वत्र प्रायश्चितम् ॥ ४९ ॥

## काꣳस्य वानस्पत्य मार्त्तिकैरभिचारब्रह्मवर्चसप्रतिष्ठाकामा यथासंख्यम् ॥ ५० ॥

कांस्यादीनि प्रणयनाश्रितानि मृदन्तानि अभिचारादीन्साधयन्ति । न तदाश्रया क्रिया । शब्दस्य तत्परत्वात्कांस्यादीनां फलसम्बन्धः । एवं च सति विकार एषामप्रवृत्तिः पुरुषार्थत्वात् । वानस्पत्ये तु वारणे प्रवर्त्तमाने क्रत्वर्थस्य साधारणत्वात्तदाश्रयः । कामो ब्रह्मवर्चसे प्रवर्त्तयत्येव । ता एताः प्रणीता दृष्टार्था उत धर्ममात्रा इति? धर्ममात्रा इति ब्रूमः । देशनियमात्पात्रनियमाच्च । तथा मन्त्रवत्तोपदेशात् । शिरः संस्तवाच्च । शिरो ह वा एतद्यज्ञस्य यत्प्रणीता

इति। अनवखण्डनसामान्याच्छिरः संस्तवः। स्कन्दनप्रतिषेधश्च
र्ममात्र उपपद्यते। इतरथा ह्यवश्यम्भाविस्कन्दनमिति। अन्ते
तिपत्तिविधानाच्च। अथ प्रणीता दक्षिणतः परीत्य निनयती
दृष्टार्थत्वे हि कदाचिदुपयुक्ता भवेयुस्तत्र प्रतिपत्तिविधानं पा
स्यात्। अपाक्षिकं च श्रवणम्। तस्माद्धर्ममात्रा इति। दृष्टा
द्रव्याणां क्रियाभिनिर्वृत्त्यर्थता प्रसिद्धेः। न हि कश्चिद्द्रव्यमदृष्टा
रिकल्पयति। सन्ति चात्रोदकसाध्याः क्रियाः। न च तत्सिद्धयेन्य
कमुपदिश्यते। तेन दृष्टार्थैवगम्यमानेपि यो नामादृष्टङ्कल्पय
दिङ्नियमवद्धोजनादप्यदृष्टं कल्पयेत्। लिङ्गाच्च प्रणीताभिर्ह
संयौतीति। यदुक्तं दशादिनियम इति स नियमो दृष्टाय।
संस्तुतिः प्राग्भागसामान्यात्। स्कन्दनप्रतिषेधश्च सुतरां दृष्टा
उपपद्यते। प्रतिपत्तिः शेषस्येति। दृष्टार्थत्वेपि सन्देहः। किं
वनार्था उत सर्वार्था इति?। तत्र केचित्प्रतिषेधश्च सुतरां दृष्टा
उपपद्यते। प्रतिपत्तिः शेषस्येति। दृष्टार्थत्वेपि सन्देहः। किं सं
नार्था उत सर्वार्था इति?। तत्र केचित्प्रणीताभिः संयौतीति
क्यसामर्थ्यात् संयवनार्थतामाहुः। द्रव्यप्रक्लृप्तेः परार्थत्वात्तत्र
विशेषात्सर्वार्थत्वादनुवादोयमित्यपरे। किं चाग्नीषोमीये प्रति
नुपपत्तेः संवयवनार्थत्वे हि तदभावादेव प्रणीतासु व्यर्थः प्रति
इति। निरूढे च प्रतिप्रसवानुपपत्तिः। तत्रापि हि नैव सं
नमस्ति। सर्वार्थत्वे पुनः प्रतिषेधप्रतिप्रसवावुपपद्येते। सूत्रक
स्थानाच्च प्रणीताद्युपसादिति। तस्मात्सर्वार्था इति ॥ ५० ॥

तृणैरग्नीन्परिस्तीर्य पुरस्तात्प्रथमं द्विशः पात्राणि
सꣳ सादयति ॥ ५१ ॥

तृणशब्दो दर्भविषयः। यज्ञिया तु वै दर्भा इति लिङ्ग
दर्भैस्तृणन्ति हरितैः सुवर्णैरिति च। समाचाराच्च। आचरन्ति
दर्भैः परिस्तरणम्। आचार्याभिप्रायाच्च। बर्हिषस्तृणे तिरश्ची
धातीत्युक्त्वा ऽन्ये वा युक्तत्वादित्यभिधायाहान्यत्रापि तृणार्थे
अन्यदुपादीयमानं बर्हिर्जातीयमेव प्रतीयते न तृणान्तरजाती
पुरस्तात्प्रथममिति दिगभिप्रायम्। आहवनीयस्तु कार्यक्रम
प्राप्नोति। ततो गार्हपत्यदक्षिणाग्नी तयोरपि पुरस्तादेव प्रथमं

शेषं च स्मृतिवशात् । प्रदक्षिणमावृत्तिसामन्तेषु प्रदक्षिणमिति । इह च परिस्तीर्येति परिः समन्तार्थः । स्मार्त्ते चैतास्मिन् सति कर्मे तदपचारे स्मार्त्तमेव प्रायश्चित्तम् । तच्चैतत्परिस्तरणमाहुत्यङ्गं यज्ञसंयोगात् । स हैष यज्ञ उवाच नग्नताया वै बिभेमीति प्रकृत्य तस्मादेतदग्निमभितः परिस्तृणन्तीत्याह । यज्ञसम्बन्धादाहुतिर्यज्ञशब्देनोच्यते । अथ यज्ञसम्बन्धमात्रमेवोच्यते । तथासत्याग्निव्यतिरेकेणान्यत्रापि स्यात् । तत्र तस्मादेतदग्निमभितः परिस्तृणन्तीत्यसमञ्जसं स्यात् । तस्मादाहुत्यङ्गमेतत् । तत्रापि केचिदाहुत्यर्थत्वात्पदवर्वीहोमहिरण्यादिषु वाक्यसंयोगात्परिस्तरणमिच्छन्ति । वाक्यं ह्येतत् । स हैष यज्ञ उवाचेति । तच्च प्रकरणानुरोधेन न यज्ञविशेषे व्यवस्थापयितुं शक्यमिति । तदेतदसद्वाक्यस्य यज्ञविशेषविषयत्वात् । स हैष यज्ञ उवचेति एष इत्ययं शब्दः प्रकृतयागविषयः । तस्माद्दर्शपूर्णमासाहुत्यङ्गमेव । तथा चाह परिस्तीर्य तं पूर्ववत्पात्रासादनमिति । द्विशः पात्राणि सं सादयतीति द्वे द्वे एकीकृत्य सा चैषा द्वन्द्वता पात्रोद्देशसामर्थ्यात्सर्वत्र प्रवर्त्तते । एवं हि समामनन्ति द्वन्द्वं पात्राण्युदाहरन्ति । ननु च शूर्पं चाग्निहोत्रहवणीं चेत्येवमादिसमाम्नानाद्दर्शगणस्यैव द्वन्द्वता । इतरथा हि पाठवैयर्थ्यप्रसङ्गात । आह च तद्दशदशाक्षरा वै विराड् विराड् वै यज्ञ इति । नवोक्तहेतुत्वात् । उक्तं हि पात्रोद्देशेन द्वन्द्वता विधानमिति । पाठवैयर्थ्यप्रसङ्ग इति चेत् । न विशिष्टद्वन्द्वपरिग्रहार्थत्वादन्यथा हि विनियोगक्रमव्यवस्थितानां द्वन्द्वता स्यात् । तत्र स्फ्यस्य कपालैः सह द्वन्द्वता न स्यात् । अथ पुनः पाठे सति विशिष्टद्वन्द्वपरिग्रहः सिद्धो भवति । यत्पुनरुक्तं तद्दशदशाक्षरा वै विराड् विराड् वै यज्ञ इति । सोऽप्ययुत्यपवादः । एवं च सति विकारे चर्विष्ट्यां स्फ्य एक एवासाद्यते । न हि तत्र द्वन्द्वोपजनकानि कपालानि सन्तीति । अथोपरितनेन द्वन्द्वता क्रियते । तत्र यथापाठं द्वन्द्वता न कस्यचित्स्यात् । ननु वैपरीत्येपि स्फ्यस्य द्वन्द्वताभावप्रसङ्गः किं क्रियताम् । वज्रयथाऽर्थं मा भूदिति । अर्थवदासादितानां तु द्वन्द्वगतविशेषानाम्नानात् यस्य कस्य चिद्येन केन चिद्द्वन्द्वतेत्यविरुद्धम् । सूत्रकाराभिप्रायाच्च । द्विशः पात्राणीत्युक्त्वा शूर्पाग्निहोत्रहवणिस्फ्यकपालमित्येवमादि तु द्वन्द्वैकवद्भावमाह । तेन च सिद्धायां द्वन्द्वतायां द्विश इत्यवाच्यं

स्यात् । उक्तं च तस्मात्सर्वत्र द्वन्द्वतेति सिद्धम् । पात्रशब्दः साध
चनो न खातवद्विषयः । तथा हि स्रुक्चकपालशम्याकृष्णाजिना
नामपात्रता स्यात् । साधनं चेत्पात्रं कपालसमुदायस्य साधना
द्यथाभूतस्य द्वन्द्वता । प्रतिचितिसाधनभाव इति चेत् । तथा
प्रतिचिति द्वन्द्वता । न समाम्नानसामर्थ्यात् । स्फ्यं च कपा
नि चेति । उद्धरणपात्र्योरपि कपालवदन्येन द्वन्द्वता । अर्थप्रसं
या द्रव्योपकल्पनमिति परिभाषितत्वादवाच्यम् । पात्रासादनमि
चेत्स्याद्देशकालार्थत्वात् ॥ ५१ ॥

## यजमानो वा ॥ ५२ ॥

विकल्पार्थोयमारम्भः ॥ ५२ ॥

## शूर्पाग्निहोत्रहवणि ऽर्थवच्च ॥ ५३ ॥

स्फ्यकपालशम्याकृष्णाजिनगुलूखलमुसलं दृषदुपल
इति यावत् । आसादयतीति अनुवर्त्तते । शूर्पं प्रसिद्धं
स्यात् लिङ्गाच्च । यदि नडानां यदि वेणूनां यदीषीकाणामिति । प
च्चाध्वर्युरेव कर्त्ता स्यात्सामाख्यानान्न वा करणस्याचोदितत्वा
अभ्यासङ्गाच्च । तस्मात्तद्भूतानामुपादानमिति । लिङ्गाच्च । तथा
वैषामत्राशुद्धस्तक्षावऽन्यो वामेध्यः कश्चित्पराहन्तीति । १अर्थवच्चे

---

१ येषां येषां पात्राणामत्रोपयोगस्तेषां सर्वेषामुपयोगक्रमेणास
दनमित्यर्थवच्चेत्यनेन बोध्यते । तथा च कात्यायनः—

"प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः ।
तत्तथा सादयेद्द्रव्यं यद्यथा विनियुज्यत" इति ।

तानि चैवम् शूर्पाग्निहोत्रहवणी, स्फ्यः कपालानि, शम्
कृष्णाजिनम्, उलूखलमुसलम्, दृषदुपलम्, पात्री पवित्रच्छेदनानि
पवित्रे उपवेषः, आज्यस्थाल्युपसर्जनी पात्रम्, कुशमुष्टिरन्वाहार्यपा
म्, वेदितृणमभ्रिः, योक्त्रं स्रुवः, जुहूपभृत्, ध्रुवा सन्नहनावच्छा
नानि, परिधयो विधृत्यौ, आज्यं पुरोडाशपात्र्यौ, होत्रषदनं प्रता
दानम्, औषधं प्राशित्रहरणे, अन्वाहार्यतण्डुला अन्तर्धानकटः, पू
पात्रं पक्षे समिद्द्वयं च, इध्मवर्हिषोरुपकल्पनं खड्वत्तं चेति ।

अर्थोऽस्यास्मिन्विद्यत इति अर्थवत्प्रयोजनवदित्यर्थः । तच्च विनियोगक्रमेणासाद्यते । अर्थवद्ग्रहणाद्यपि न परिध्युपवेषादिवत्साक्षाच्छ्रूयते । अन्वाहार्योपसर्जनीपात्रादि तदप्यासादनीयम् । इन्धनाद्यपीति चेत् । नाचोदितार्थत्वात् । चोदिते हि यदर्थात्प्राप्नोति तदासाद्यते । तत्रापि याज्ञिकैर्दण्डकः प्रणीतोऽनः पात्री वा पवित्रच्छेदनानि चेत्यत्रमादि । तत्र चोपवेषसमनन्तरमाज्यस्थाल्युपसर्जनीपात्रम् । पेषणोपधानाज्यनिर्वपणानामेककालत्वात् । पिषन्ति पिष्टान्यभीन्धन्ते कपालान्यथैक आज्यं निर्वपतीति । उपधानोत्तरकालमुपसर्जन्यधिश्रयणमिति । कुशमुष्टिरपि तर्हि ततः पूर्वं प्राप्नोति । एवं हि सूत्रितं निरुप्याज्यं वेदं करोतीति । न समत्वादुपधानादुत्तरकालमुपसर्जन्यधिश्रयणमाज्यनिर्वापणाच्च वेदबन्धनम् । तुल्यकालतोभयोरपीति न नियमोऽवसीयते । उच्यते । कुशमुष्ट्युपसर्जनीपात्रयोर्यद्यप्येककालता । तत्कार्ययोस्तुगम्यते पौर्वापर्यं । प्राक्कालीनं ह्युपसर्जनीकार्यं वेदकार्यादतः पूर्वमुपसर्जनीपात्रं ततः कुशमुष्टिरिति । ततश्चान्वाहार्यपात्रं प्राशित्रहरणोत्तरकालं प्राप्नोति । न तण्डुलानामसाववसरः तत्पात्रं तु कुशमुष्ट्यन्तर्द्धानतृणयोरन्तराल इति । पात्रस्याधिश्रयणार्थत्वादेवं सर्वत्र कार्यक्रमेणासादनमालोचनीयमिति । विकारेपि च प्राकृतपात्रकार्यापन्नस्य वैकृतस्यासादनादिप्रवर्त्तत एव । किं पुनस्तत्रापि कार्यक्रम एव । न, प्राकृतपात्रक्रमः । प्रकृतावपि हि कार्यक्रम एव कारणमासादने । तद्यथा निरूढे वपाश्रपण्यनन्तरं दक्षिणाद्रव्यमिति । यत्पुनर्विकृतावप्राकृतकार्यापन्नम् । यथा मन्थनचतुष्टयम् । यूपक्षुरचतुष्टयादि तत्प्रकल्प्यत एव नासाद्यते न प्रोक्ष्यते च । न हि तस्यासादनप्रोक्षणे विहिते । न च कार्यापत्तितः प्राप्तिस्तस्मादुपकल्पनमेव । चर्विष्ट्यां चरुपात्रस्य तर्हि कपालधर्माः सन्तु कार्यापत्तेरिति । स्यादेतदेवं यदि कार्यापत्तिः स्यात् । न त्विह तथा । इह हि न चरुपात्रगतेनोष्मणा चरुः पच्यते । कपालगतेनेव पुरोडशः । कथं तर्हि चरुपात्रगत ऊष्मोदकमेव तपयति तत श्चरुसिद्धिरित्यकपालकार्यापत्तिरिति । ततश्चरुपात्रमप्युपकल्प्यते । यच्चप्रकृतावेव याज्ञिका इध्माबर्हिषोरुपकल्पनमाहुः तदिह प्रोक्षणाभावात् । तदभावश्चोपरिष्टात्प्रोक्षणविधानात् । प्रोक्षति विकाऽस्येति ॥ ५३ ॥

श्रपणस्य पश्चादुत्तरतो वा१ ॥ ५४ ॥

शास्त्रस्य तुल्यत्वात् ॥ ५४ ॥

कर्म्मणे वामिति शुर्प्पाग्निहोत्रहवण्यादाय वाचं यच्छति ॥ ५५ ॥

साकाङ्क्षत्वाददद इत्यध्याहारः मन्त्रश्चाविशेषादुभया[र्थं] प्रयोजनमन्तरा येन्यन्तरेणापि प्रयुज्यते । शूर्पाग्निहोत्रहवण्यादानं [ह]र्वापार्थम् । तत्संनिधावाम्नानात् । प्रयोजनं पशावमन्त्रवदग्निहोत्रह[व]ण्यादानं प्रोक्षण्यर्थतया । वाग्यमस्तु पदार्थधर्म्मः । यां वा अमू[ं ह]विर्ग्रहीष्यन्वाचं यच्छत्यत्र वै तां विसृजत इति । कालोपलक्षण[ार्थ]त्वात्प्रयोजनं हविर्ग्रहणाभावेपि पश्वादौ भविष्यति ॥ ५५ ॥

प्रतपनं प्रत्युष्टं निष्टप्तमिति वा ५६ ॥

तत्संस्कारो हविर्ग्रहणार्थः तेन तदभावे न भवति ॥ ५६ [॥]

गच्छत्युर्वन्तरिक्षमिति श्रपणस्य पश्चादनस्तिष्ठ त्समाङ्क्ष्य ॥ ॥ ५७ ॥

श्रपणशब्दश्चाविशेषेपि सति अत्र गार्हपत्यविषयो ग्राह्यः । [ज]नेन गार्हपत्यं प्रागीषमनोऽवस्थितं भवति । तस्यदक्षिणं चक्र[म]ध्यानसोधिनिर्वपतीति । विकृत्यनुप्रवृत्तिदर्शनाच्च । स जघनेन गार्ह[प]त्यं प्राचीनावीति भूत्वा दक्षिणासीन एतं षट्कपालं पुरोडाशं [...]

---

१ श्रप्यन्ते अनेन हवींषि इति श्रपणो गार्हपत्यो वाहवनीयो[।] तस्य पश्चात् प्राक्संस्थान्युदगग्राणि प्रागग्राणि वा पात्राण्यासा[दय]ति । तदुक्तं कारिकायाम्—

" उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत् " इति ।

तीति । सङ्गताङ्गं समाङ्गि । सांयौगिकानि चाङ्गान्यत्र गृह्यन्ते । न हि सामवायिकव्यतिरेकणानां व्यपदेशोस्ति । अनडुत्प्राप्तिरपि तर्हि स्यात् । न केवलं गमनार्थत्वात्तयोस्तस्य चार्थाभावात् । तस्माद्युगयांक्रुवरत्रादिमात्रमेव ॥ ५७ ॥

## धूरसीति धूरभिमर्शनम् ॥ ५८ ॥

धूः शब्दो युगशम्यान्तरालवचनः स्मृतः । एवं हि स्मरन्ति व्युत्पादयन्ति च । धूर्धूर्वतेर्वधकर्मण इयमपीतरा धूरेतस्मादेव विहन्ति वहम् । धारयतेर्वा इति । वहस्य विहन्तिरनसो वाधारणं शम्यान्तरालावनुडुत्स्कन्धसम्बन्धाद्भवति । लिङ्गाच्च । तस्य वा एतस्यानसोग्निरेव धूरग्निर्हि वै धूरथ य एनद्वहन्त्यग्निदग्धमिवैषां वहं भवतीति । अतोन्यत्रोपचारवृत्तिर्यथैषाग्नयोः । धूर्भेदाच्चोभयोरभिमर्शनम् । तत्संस्काराच्च । दक्षिणामभिमृश्य तत उत्तराम् । उदक्संस्थतासम्पत्ते. । स्मर्यते हि सर्वत्रोदक्संस्थता । लिङ्गं च भवति । तथाह्युदग्भवति । तथोदीची भवतीति च । केचित्त्वेकस्या एव धुरोभिमर्शनमिच्छन्ति । वाक्यशेषात् । अग्निर्वा एष धुर्यस्तमेतदत्येष्यन्भवति हविर्ग्रहीष्यंस्तस्मा एवैतन्निन्हुत इति । एकत्वादग्नेः सकृदेव निन्हव इति । तत्पुनरेतदर्थवादप्रायम् । अनोवयवसंस्कारश्चात्र । तौ च संस्कार्यौ भिन्नौ । प्रतिसंस्कार्यं च संस्कारावृत्तिर्न्याय्येति भेदेनाभिमर्शनमिति सम्प्रदायः ॥ ५८ ॥

## देवानामित्युपस्तम्भनस्य पश्चादीषाम् ॥ ५९ ॥

अभिमृश्य जपतीति सूत्रशेषः । अथ जघनेन कस्तम्भीमीषामभिमृश्य जपतीति श्रुतत्वात् । स चायमनः संस्कारत्वान्न प्रतीपमावर्त्तते । तत्संस्कारश्च मन्त्रलिङ्गवाक्यशेषाभ्यां देवानामसि वन्हितममित्येवमादिना ऽनोभिधीयते नेषेति । अत एवैतदुपस्तौत्युपस्तुताद्रातमनसो हविर्गृह्णानीति च वाक्यशेषः । अयं च मन्त्रश्चोदितार्थाभिधायी पितृयज्ञे विपरिणीयते । पितॄणामसि वन्हितमं पिपृहूतममिति च । देवशब्दस्य प्रकृतदेववचनत्वात् । वचनं चात्रासमवेतम् । द्वयोर्हि देवतयोर्बहुवचनं श्रूयते । तेन विकार एकदैवत्ये वचनस्याविपरिणाम इति केचित् । तदेतदनुपपन्नमिव वचनस्याप्यत्र

समवायात् । बहवो ह्यत्र देवता अग्निरग्नीषोमौ चेति । न त्वग्नी
योः समुदितयोः देवतात्वादेकत्वम् । नैतदेवम् ।
मुदितयोरपि देवतात्वे देवशब्दस्य प्रत्येकवृत्तित्वम् । अग्निर्देवः
मो देव इति प्रसिद्धम् । मन्त्रलिङ्गाच्च । देवो अग्निर्देवः सोम
च । न चात्रावयवभूतोऽग्निः सोमो वा नास्ति । किं तु पृथक्त्वे
वतात्वाभावः । पृथक् तद्धितानुपपत्तेः । समुदायाच्च तद्धितप्रत्य
र्शनात् । समुदितयोरपि देवतात्वेऽग्नेः सोमस्य चास्त्येव समवा
एवं च सति अग्नीषोमाभ्यामिति द्विवचनोपपत्तिः । एवं च
अग्नीषोमयोरुज्जितिमिति च । यच्चोक्तं अपिष्टो वा देवतान्यत्वा
युक्तं तदग्निसद्वितीयस्य पूष्णो देवतात्वाद्भवति पूष्णोऽन्यत्वम् ।
वायस्तु पूष्णोऽपि न निवार्यते । अथ देवतैव देवशब्देनोच्यते ।
च सति प्रातिपदिकार्थस्याप्यनन्यत्वात् पितृयज्ञे देवशब्दस्या
परिणामः । पितरोऽपि हि नोदितत्वाद्देवता शब्देनाभिधातुं शक्य
ततश्च देवताविषयो देवशब्द इति अविपरिणामः । अथ तत्र पि
ब्देन चोदना पितृभ्यः सोमवद्भ्यः पितृभ्यो बर्हिषद्भ्य इति । न च
तरो न देवशब्देनाभिधातुं शक्यन्त इति विपरिणंस्यते देवशब्द
नैतदेवं देवताविषये हि देवशब्दे पितॄणामपि नोदितत्वाद्देवता
वशब्दप्रयोगोऽविरुद्ध एव । अथ शब्दान्तराभिहितेषु देवशब्दो
वर्त्तत इति । तथा च सत्यग्न्यादिष्वपि देवशब्दप्रयोगो दुर्ल
तत्रापि हि शब्दान्तरत्वमाग्नेयोऽग्नीषोमीय इति । इयांस्तु वि
इह तद्धितस्तत्र चतुर्थी । न चोदित एव शब्दोऽन्यत्रापि प्रयोगा
क्तम् । अथ देवशब्दो योगादग्न्यादिषु प्रवर्त्तते दानाद्देव इति ।
पि पितृयज्ञे अनूह एव । पितरो हि तत्साध्यक्रियाभिनिर्वृत्ति
फलदानाद्देवा इति । तदेतदप्यसत् । प्रत्यस्तमितावयवार्थत्वा
देवशब्दस्यार्थप्रतीतिसामर्थ्यात् । न च दानाद्देवत्वं सर्वत्रेष्यते ।
सर्पन्त्यपि गोधा सर्पशब्देनाभिधातुं शक्यते । प्रत्ययस्य विशि
तिविषयत्वाद् भुजङ्ग एव सर्पशब्देनाभिधीयते । तेनेहापि प्रत्य
विशिष्टार्थप्रवृत्तित्वाद्देव एव देवः । तेषां च बहुत्वात्समवेतं व
ननु चैवमपि देवद्वित्वम् । अग्नेरुभयत्रैकत्वात् । नैतदेवम्
हि केवलोऽग्निरपरः सोमसद्वितीय इति बहुत्वम् । ननु चैवम
वानामिति षष्ठी बहुवचनमनुपपन्नम् । न हि तदनः पृथ

सोमेन च सम्बध्यते । इतरेतरमभ्यपेक्षयोर्देवतात्वात् । यथा च देवानां देवतात्वं तथा तदर्थहविर्द्धारणद्वारेणानो देवानामित्युच्यते । सत्यमेतदेवं मन्त्रे देवशब्दस्य बहुवचनान्तत्वात्तेषां च साक्षादनः सम्बन्धाभावात्तदुपलक्षितसमुदायद्वारेणानः सम्बध्यत इत्यदोषः । ततश्च विकार एकदेवत्ययोर्देवस्यासि देवयोरसीति च युक्तरूपतरं वचनम् । लिङ्गमपि चात्र समवेतं । विशिष्टलिङ्गत्वादग्न्यादीनाम् । ततश्चादित्येष्ट्यां देव्या असीति प्रयोगः । न च देवशब्दो देवताशब्दवदाविष्टलिङ्गः । येनादित्येष्ट्यामप्यविकृतः प्रयुज्येत । देवीं वाचमजनयन्त देवा इति दर्शनात् । तथा देव्यनुमते देव्यदिते देवीराप इति चेति । केचितु लिङ्गवचनयोरसमवायं मन्यमाना अपि परिणाममिच्छन्ति । तत्पुनर्विचारणीयम् । यज्ञपतिशब्दश्चानेकयजमानके विपरिणस्यते । चोदितार्थाभिधानात् ॥ ५९ ॥

## विष्णुस्त्वेत्यारोहणम् ॥ ६० ॥

विष्णुस्त्वेत्यनेन मन्त्रेणानसो दक्षिणं चक्रमारोहति । एवं हि श्रूयते । स जघनेन गार्हपत्यं प्रागीषमनोवस्थितं भवति । तस्य दक्षिणं चक्रमारुह्यानसो विर्निर्वपतीति ॥ ६० ॥

## प्रेक्षत उरुवातायेति हविष्यान् ॥ ६१ ॥

व्रीहीन्यवान्वा । तच्चैतद्धविः प्रेक्षणं नानाबीजेष्ट्यां तत्संस्कारात्प्रतिबीजमावर्त्तते । मन्त्रश्च क्रियाशेषत्वात् । साकाङ्क्षत्वाच्चोरुवातायेत्यस्य भवेत्यध्याहारः । ननु चाथ प्रेक्षत इति प्रेक्षणस्य चोदितत्वात् श्रौतक्रियापदाध्याहार एव न्याय्यः । सत्यमेवं, यत्र तेनैकवाक्यतोपजायते । इह पुनरुरुवातायेति विस्तीर्णता हविषः प्राणाय वाताय प्रार्थ्यते । न चासौ प्रेक्षत इति क्रियापदेन शक्यतेभिधातुम् । तस्माद्यथोक्त एव भवेत्यध्याहारः ॥ ६१ ॥

## अपहतमिति निरस्यत्यन्यत् ॥ ६२ ॥

हविर्द्रव्यव्यतिरेकेण यदन्यल्लोष्टादि तदपहतमित्यनेन मन्त्रेण निरस्यति । रक्षोभिधायकत्वाच्च मन्त्रस्योदकोपस्पर्शनं भवति । प्रतपनमन्त्रे चैवम् । नानाबीजेषु च शक्यत्वाद्युगपदपद्रव्य-

निरसनं भवति ॥ ६२ ॥

अविद्यमाने ऽभिमृशेत् ॥ ६३ ॥

अभिमर्शनेष्ययमेव मन्त्रो । अथापास्यत्यपहतꣳ रक्ष
यद्यत्र किञ्चिदापन्नं भवति । यद्युनाऽप्येव मृशेदिति श्रुतत्वात्
नावर्जिषु च भेदेनाभिमर्शनसंस्कारः । ततश्च मन्त्रावृत्तिः ॥

यच्छन्तामित्यालभते ॥ ६४ ॥

हविर्द्रव्यं प्रकृतत्वात् । पञ्चभिरङ्गुलीभिरभिमर्शनं स
मन्त्रलिङ्गवाक्यशेषाभ्यां यच्छतामपञ्चेति निबध्नन्तु पञ्चेत्येतदु
वति । तथा पञ्च वा इमा अङ्गुलयः पाङ्क्तो वै यज्ञस्तद्य
तदत्र दधातीति । नवोपदेशाभावात् । मन्त्राणां चाविधायक
यच्छन्तां पञ्चेति चग्रहणापेक्षया । बहुषु च भेदेनालम्भः स
रात् ॥ ६४ ॥

देवस्यत्वेति गृह्णात्याग्नेयं चतुरो१ मुष्टीन् ॥ ६५

ग्रहणे मन्त्रः स्यात् । तदुपदेशात् । स गृह्णाति देवस्य
प्रक्षेपे वा । गृह्णातेस्तदर्थत्वात् । तत्कुतः । वचनादग्निहोत्रह
चतुरो मुष्टीन्निर्वपति । मुष्टीन्यजमानो गृह्णीयात् । परिम
याजमानत्वात् । न वा पदार्थप्राधान्यात् । तस्य चाध्वर्युकर्तृक
तत्कुतः । समाख्यानाद्यजमानपरिमाणमन्यविषयम् यथा पञ्च
परिवासयेदिति ॥ ६५ ॥

एवमग्नीषोमीयम् ॥ ६६ ॥

ननु चोत्तरसूत्रादेव तत्प्राप्तेरवाच्यमेतदिति । न हि त
ग्नविषयम् । यथा दैवतमन्यदित्येतद्विषयताप्यस्यास्त्विति

---

१ मुष्टित्रयं मन्त्रेण चतुर्थं तूष्णीम् । एवमेव सर्वेषु सूत्रे
हणानन्तरं चाग्निहोत्रहवण्याः शूर्पे हविः पृथक् पृथक् प्र
म् । एवं शूर्पादानस्यापि दृष्टार्थता भवति । अग्निहोत्रहवण्यां
क्तायां हविरन्तरं ग्रहीष्यते; आपश्च तत्र करिष्यन्त इति तत्त्व

ततश्चावाच्यमेवमग्नीषोमीयमिति । न समाम्नायोपप्रदर्शनार्थत्वात् । यथा दैवतमन्यदिति हि प्राप्तौ समाम्नायो न प्रदर्शितः स्यात् । तत्र पूर्वस्मिन् मन्त्रे ऽग्नीषोमाभ्यां जुष्टं गृह्णामीति शेषभावमियात् ॥ ६६ ॥

## यथादेवतमन्यत् ॥ ६७ ॥

ऐन्द्राग्नार्थोऽयमारम्भः । ननु चैवं यथा देवतमिति नोपपद्यते । वीप्सायां ह्ययमव्ययीभावः । या या देवता यथादेवतमिति । वीप्सा च बहुविषया । न चात्र देवता बहुत्वम् । अतोनुपपन्नमेतदिति । अथ विप्रकृत्यर्थमुच्येत । तत्रापि चोदकेनैव प्राप्तत्वादवाच्यता । प्रकृत्यर्थत्वे च शब्द दोष इत्युक्तम् । उच्यते, प्रकृतावेव देवता बहुत्वमस्ति । तद्वैके चरुं निर्वपन्ति पौर्णमास्याᳪ सारस्वते ऽमावास्यायां सरस्वत्या इति । ऐन्द्राग्नेन सह देवता बहुत्वम् । अथायमविधिः स्यात्तथाभ्युदितेष्टिविषयं भविष्यति । अस्ति हि तत्र व्रताशक्तौ ग्रहणे देवताबहुत्वमिति । नन्वभ्युदितेष्टिरपि विकृतिरूपा ततश्च विकृत्यन्तरवन्नैवं विषयतापि स्यात् । सत्यमेवम् । तदेवेदं कर्मविकृतरूपमित्यदोषः ६७ ॥

## भूतायत्वेति शेषाभिमर्शनम् ॥ ६८ ॥

साकाङ्क्षत्वान्मन्त्रस्य परिशेषयामीत्यध्याहारः । न ह्यत्राभिमर्शनक्रियापदमेकवाक्यतामुपैति । किमिति । भूताय प्रभवायाविच्छेदाय नारातये नादानाय कृपणतया परिशेषयामीति एकवाक्यता । न ह्यस्याविच्छेदायाभिमर्शनम् । परिशेषणं त्वविच्छेदाय भवति । तस्माद्यथोक्त एव वाक्यशेषः । स चायं शेषसम्बन्धेपि सति हविष एव संस्कारः । प्रयोजनवत्वात् । न च शेषेण संस्कृते नास्ति प्रयोजनम । अत स्रङ्मालापनयनवच्छेषिसंस्कारः प्रतिपत्तव्यः । तद्यथा । स्रङ्माला देवदत्तीयेति कृत्वा शुचौ देशे व्यवस्थाप्यते । अपगतदेवत्तसम्बन्धाया अपि मालायाः संस्कारो देवदत्तस्यैवानिष्टपरिहारार्थे, न मालाया, एवमिहापीति, प्रयोजनं शेषिसंस्काराभिसम्बन्धार्थतया सशेषं ग्रहणं कर्त्तव्यमिति ॥ ६८ ॥

स्वरति प्राङीक्षते ॥ ६९ ॥

तच्चैतदूहक्संनिरोधोपजातश्रमापनोदायेक्षणम् । परिवृत्ति वा एतदनो भवति तदस्यैतच्चक्षुः पाप्मगृहीतमिव भवति य वै श्वरहदेवाः सूर्यस्तत्स्वरं वै तद्ततोभिविपश्यतीति लिङ्गात् प्रयोजनं निर्वापाभावे न भवति ॥ ६९ ॥

दृ॒ हन्तामित्यवरोहति ॥ ७० ॥

अनसः ॥ ७० ॥

गच्छत्युर्वन्तरिक्षमिति१ श्रपणस्य पश्चात्सादयति पृथिव्यास्त्वेति ॥ ७१ ॥

यो यदा श्रपणः । अग्निशब्दश्चात्र२ श्रपणाग्निविषयः । न दे तावचनः सन्निधानात् । प्रयोजनं विकृतावविपरिणामः ॥ ७१ ॥

पात्र्यां वा स्फ्योपाहितायाम् ॥ ७२ ॥

एतदनः सम्बन्धिप्रतिपत्तव्यम् । उतो पात्र्यै गृह्णन्तीति हि मामनन्ति तदा ॥ ७२ ॥

धूरीषारोहणानि पात्रीबिले जपति ॥ ७३ ॥

धूरीषारोहणादिशब्दैस्तन्मन्त्रा लक्ष्यन्ते । जपति शब्दोपादाना विलिङ्गा अपि वचनसामर्थ्यात् विनियुज्यन्ते । अनन्तरायमुतर्हि

---

१ उत्तरदेशं प्रति ।

२ अत एव वरुणप्रघासेषु पूर्वेद्युर्मेषमिथुनकरम्भपात्रार्थं गृ तानां यवानां दक्षिणाग्नेः पश्चात् सादनम् । पित्र्यायां च दिग्विपर्य दूगार्हपत्यदक्षिणाग्न्योरुत्तरतो हविषामासादनम् । त्र्यम्बकेषु गार्हप स्य दाक्षिणत इति विवेकः ।

जूंषि जपेदिति १ ॥ ७३ ॥

द्रृंहन्तामित्युत्थानम् ॥ ७४ ॥

अस्मिन्पक्षे ॥ ७४ ॥

कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशै श्छिनत्ति पवित्रे स्थ इति ॥ ७५ ॥

अप्रशीर्णाग्रावग्रवन्तौ । अनन्तर्गर्भौ ययोरन्तर्मध्ये गर्भौ न स्तः । तौ कुशैश्छिनत्ति पवित्रे स्थ इत्यनेन मन्त्रेण ॥ ७५ ॥

त्रीन् वा ॥ ७६ ॥

छिनत्तीत्यनुवर्त्तते । तत्र मन्त्रो न स्यात् द्विवचनान्तत्वात् । पवित्रद्वयपक्षे च कृतार्थत्वात् । स्याद्वार्थोऽभिधानसामर्थ्यात् । प्रातिपदिकार्थस्य विद्यमानत्वात् । द्विवचनस्यासमवायान्नेति चेत् । माभूत्समवायः । गुणो हि संख्या प्रातिपदिकार्थः प्रधानभूतः । न च

---

१ इदमत्रानुसन्धेयम् । एषां मन्त्राणां त एवार्था भवन्ति येऽनसि । कथम् ? धूस्तावद्धूर्वतेर्वधकर्मण इति सापि ( पात्री ) किं चिदागच्छद्विहन्ति । तत्राप्यग्निरस्ति सर्वगतत्वात् । हविर्ग्रहीष्यन्नध्वर्युस्तामतिक्रामति, तस्या अपि निन्हुते धूरसीत्यादिना । अनोवच्च पात्र्यपि हविष्यान् धारयतीति वन्हितममित्यादिशब्दैरुच्यते । विष्णुश्चाध्वर्य्वात्मकः, तत्र पादेन क्रमते अत्र तु हस्तेनेति विशेषः । तस्मात् सिद्धप्रयोगाणां पात्र्यामपि त एवार्था इति हरिस्वामी । यदि तु पात्र्यां गृह्णीयात्तदा धूरित्याद्यभावेन तदननुष्ठानकृतं व्यवधानमन्तरायमन्तरेण तत्प्रकाशकयजूंषि जपेदिति माधवाचार्याः । पात्रीतः पश्चाद्देशे उत्तरस्मिन्वोपविश्य प्राङ्मुखो ग्रहणं कुर्यात्, पित्र्यायां दक्षिणासीनः, त्र्यम्बकेषूदङ्ङासीनः । आसनाय स्थानासम्भवे पात्रीमपरेणैव गत्वा दक्षिणतः प्राङुपविष्टेनैव ग्रहणं कार्यम् । पात्रीगार्हपत्योरन्तराले गमनस्यासिद्धत्वात् । अनस्यपि प्राङ्मुखोपविष्टेनैव ग्रहणं कर्तव्यमिति दिक् ।

गुणानभिधानेन प्रधानमभिधास्यतीति शक्यते उत्स्रष्टुम् । तस्मा
त्वपक्षेऽपि मन्त्रः प्रवर्त्तत एव ॥ ७६ ॥

हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवि-
तुर्व इति ॥ ७७ ॥

हविर्ग्रहणीति न हविर्ग्रहणविवक्षया । किं तर्हि अग्निहो
वण्यां चतुरो मुष्टीन्निर्वपतीत्याम्नानात् । अतस्तद्विवक्षेयम् । प्रयो
ग्रहणाभावेपि तत्रापः क्रियेरन् । ताभ्यामुत्पुनाति सवितुर्व इत्य
न मन्त्रेण ॥ ७७ ॥

तास्थानं तयोः ॥ ७८ ॥

ताः अपिः पवित्रयोः स्थानं वचनसामर्थ्यात् । पवित्रे नि
प्रणीतास्विति चाम्नानात् ॥ ७८ ॥

सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप
इति ॥ ७९ ॥

उदिङ्गयति ऊर्ध्वं गमयति । दक्षिणग्रहणं शक्यमवक्तुं,
माचारात्प्राप्तेः । कर्त्तव्यं वा, सव्यंस्थितानामेव प्रोक्षणीनामुदि
यथा स्यादिति । यज्ञपतिशब्दश्चानेकयजमानके यथार्थं विन
णस्यते १ ॥ ७९ ॥

प्रोक्षितास्थेति तासां प्रोक्षणम् ॥ ८० ॥

ताभ्य एवाद्भ्य एकदेशेनेति सम्प्रदायः । नेत्यपरे
त्मनि क्रियाविरोधात् । न हि प्रोक्षणे कर्मता करणता

१ स च 'यज्ञपती सुधातू' 'यज्ञपती देवयुवौ' 'यज्ञ
सुधातून्' 'यज्ञपतीन् देवयून्' इत्यादि यथायथमूहनीयः ।

तासां सम्भवतीति । अन्याश्च नोपदिश्यन्ते । तस्मामन्त्रोच्चारणमेव । तदेताभ्यो निन्हुत इति च लिङ्गात् । अत्र पुनस्तासां प्रोक्षणमित्यसमञ्जसं स्यात् । हविश्चेति प्रोक्षणक्रियानुकर्षणार्थचशब्दानुपपत्तिश्च । तस्मात्सम्प्रदाय एव ज्यायान् । अथ ताभिरेव प्रोक्षणं विरुध्यते ततः प्राणीतेन भविष्यति । निन्हवश्चार्थवादप्रायः ॥ ८० ॥

## हविश्चाग्नये त्वाग्नीषोमाभ्यां त्वेति ॥ ८१ ॥

अत्र क्रियापदाभावात् अधस्तनसूत्रोपात्तं प्रोक्षणक्रियापदं च शब्देनानुकृष्यते । तच्च यथाश्रुतमेकवाक्यतामनुपपद्यमानस्तत्प्रोक्षतीति विपरिणतरूपमनुकृष्यते ॥ ८१ ॥

## यथा देवतमन्यत् ॥ ८२ ॥

कृतं व्याख्यानम् ॥ ८२ ॥

## पात्राणि दैव्यायेति ॥ ८३ ॥

प्रोक्षतीत्यनुवर्त्तते । शुन्धध्वं इति बहुवचनसामर्थ्यात् । कुशीकृत्य प्रोक्षणमित्येके । तन्न प्रोक्षणस्य पात्रोद्देशेन विधानात् । समुदायस्य वाचोदितत्वात् । प्रतिसंस्कार्यं च संस्कारावृत्तिर्न्याय्या । तस्मात्प्रतिपात्रमेव । बहुवचनं तु पूजार्थम् १ । एता उत्या उषसः केतुमक्रतेति वत् । देवशब्दस्य स्थाने पितृयज्ञे प्रधानार्थेषु पात्रेषु-शूर्पकपालकृष्णाजिनोलूखलमुसलादिषु पितृशब्देन प्रयोगः । यानि त्वङ्गप्रधानार्थानि प्रनाडिकयापि तेषु देवपितृशब्दप्रयोगः । यत्तु तत्रापि देवकर्मार्थं तत्र दैव्यायेत्येव । पात्र प्रोक्षणे च विनियोगक्रमः । क्रमान्तराभावात् ॥ ८३ ॥

## असञ्चरे प्रोक्षणीर्निधाय ॥ ८४ ॥

स चासञ्चरः प्रणीताहवनीयान्तरालम् । ता नान्तरेण सञ्चरेयुरित्युक्तत्वात् । यद्यपि चाहवनीयगार्हपत्यान्तराले हविष्पात्रस्वा-

---

१ परेतु यथाव्रीहिप्रोक्षणे जातेः प्रोक्षणं न व्यक्तेरेवं प्रात्रप्रोक्षणेपि, तथाच बहुवचनमप्युपपन्नमित्याहुः ।

स्यृत्विजां अन्तरागमनप्रतिषेधे सति असञ्चरव्यपदेशो भवति । त
पि तु प्रकरणसमधीत एव परिगृह्यते । नान्तरेण गच्छेयुरिति ।
रस्य च सर्वविषयत्वात् । प्रोक्षणीशब्दश्च यौगिको न जाति
मित्तः संस्कारनिमित्तो वा । प्रोक्षणीभिरुद्वजिताः स्म इत्यसंस्कृ
शब्दप्रयोगात् । प्रकृत्युपसर्गप्रत्ययसमुदायार्थस्यावगम्यमानत्वा
उक्षतिः सेचने, प्रशब्दश्च प्रकर्षे, करणे च प्रत्ययः प्रोक्ष्यत आ
रिति । चिन्तायाः प्रयोजनम् । आज्यप्रोक्षणीरुद्यस्येत्यत्रासंस्
आदीयन्ते ॥ ८४ ॥

## शर्मासीति कृष्णाजिनादानम् ॥ ८५ ॥

शर्मासीत्यनेन मन्त्रेण कृष्णाजिनादानम् । कृष्णाजिनमिति
ष्ठीतत्पुरुषः । कृष्णस्य अजिनं कृष्णाजिनम् । न कर्मधारयः । कृष्
तदजिनं चेति । कुत एतल्लिङ्गात् । स कृष्णो भूत्वाचचार तस्य
अनुविद्य त्वचमेवावच्छाया जह्रुरिति । कृष्ण इति मृगोऽभिधीयते ।
योजनं मार्गं यथा स्यादिति । तदेतदादानमवघातार्थं तद्
वेऽभावः ॥ ८५ ॥

## अपेत्य पात्रेभ्योऽवधूनोत्यवधूतमिति ॥ ८६ ॥

यद्यपि चापगमनक्रियाऽध्वर्युविषया १ । तथापि सामर्थ्या
कृष्णाजिनापनयनं प्रत्येतव्यम् । तस्य ह्यपनयनमत्रश्रूयते । अतिना
पात्राण्यवधूनोति यद्ध्यस्यामेध्यमभूत्तद्ध्यस्यैतदवधूनोतीति । त
दवधूननं दृष्टार्थत्वात्सकृत्क्रियते । रक्षोभिधायकत्वाच्च मन्त्रस्योद्
लम्भो भवति ॥ ८६ ॥

---

१ हरिस्वामिमतेनेदम्, तेहि ' आतिनत्य पात्राणि ' इत्यस्य
नत्य अतिक्रम्य पात्राण्यतीत्य ' नहि पात्राणि मेध्यानि सन्ति
नरमेध्यानि कर्तुं युक्तम्, इत्यभिप्रायेणाध्वर्युः पात्राण्यतिक्रम्य
ष्णाजिनं सकृदवधूनोतीति व्याचख्युरिति ।

१प्रत्यग्ग्रीवमास्तृणात्यदित्यास्त्वगिति ॥ ८७ ॥

चर्मणां प्राग्ग्रीवतोक्ता तदपवादः प्रत्यग्ग्रीवमिति ॥ ८७ ॥

सव्याशून्ये निदधात्युलूखलमद्रिरसि ग्रावासीति वा ॥ ८८ ॥

सव्येन पाणिना अशून्ये कृष्णाजिने उलूखलं स्थापयति । अद्रिरसीत्यनेन मन्त्रेण ग्रावासीति वा ॥ ८८ ॥

प्रतित्वेत्युभयोः ॥ ८९ ॥

शेषः । अत्राद्रिग्रावशब्दावुलूखलं स्तोतुं प्रयुज्येते । नहीदमश्ममयमुलूखलम् । वानस्पत्य इति विरोधात् । पृथुबुध्न इति च मन्त्रवर्णात् । सामर्थ्याच्च । अभिनिहितमेव सव्येन पाणिना भवति । अथ दक्षिणेनोलूखमाहरतीति । न ह्यश्ममयमुलूखलं दक्षिणेनैकेनाहर्तुं शक्यते । तस्मादुपचारवृत्त्याद्रिग्रावशब्दौ । ये तु मन्त्राभिधानसामर्थ्यमात्रेणैवाश्ममयतां नियमयन्ति त एव प्रष्टव्याः । किं च मुसलेपि ग्रावशब्दप्रयोगात् । बृहद्ग्रावासीति । असंशयं च तद्वानस्पत्यम् । अत्र केचिन्नखनिर्भिन्नचरौ वानस्पत्यपदस्य स्थाने मानुष इति विपरिणाममिच्छन्ति । तत्पुनर्नातियुक्तमिव । न ह्युलूखलकार्यापत्तावपि नखानां कृष्णाजिने स्थापनमस्ति । यतो न ते उलूखलवत्कृष्णाजिने स्थिता तण्डुलनिर्वृत्तिं कुर्वन्ति ॥ ८९ ॥

हविरावपत्यग्नेस्तनूरिति ॥ ९० ॥

अग्नेस्तनूरित्यनेन मन्त्रेणोलूखले हविर्द्रव्यमावपति । अग्निशब्दश्च न देवता वचनो लिङ्गात् । यज्ञो हि तेनाग्नेस्तनूरिति । यज्ञसा-

---

१ प्रतीच्यां ग्रीवा यस्य तत् प्रत्यग्ग्रीवम् । "कृष्णाजिनमवधूनोत्यूर्ध्वग्रविमुदङ्ङावृत्यावधूतमित्यथैतत्पुरस्तात्प्रातिचीनग्रीवमुत्तरलोमोपस्तृणाति" इत्यादिना तैत्तिरीयेप्युक्तमेतत् ।

धने यज्ञशब्दस्तस्य चाग्निसम्बन्धादग्नेस्तनूरित्युच्यते । त
ज्वलनविषयोऽग्निशब्दः। अग्नीषोमयोश्चानभिधानात्। प्रयोजनम
अपान्तनूरिति विपरिणामः। तत्रापि सवनीयैः सहानुष्ठानात्।
ति प्रयोजने दार्षद्वतावभृथविषयतोऽस्य। पितृयज्ञे च देववीतय
स्य स्थाने पितृवीतय इति प्रयोगश्चोदितार्थाभिधानात् ॥ ९० ॥

वाचं विसृजते ॥ ९१ ॥

एवं हि श्रूयते यां वा अमूं हविर्ग्रहीष्यन्वाचं यच्छत
विसृजते इति ॥ ९१ ॥

यजमानश्च ॥ ९२ ॥

वाचं विसृजत इति वर्त्तते ॥ ९२ ॥

हविष्कृता वा ॥ ९३ ॥

हविष्कृदाव्हानकाले वा वाग्विसर्गः । तत्रापि हि श्रू
वाग्वै हविष्कृद्वाचमेवैतद्विसृजत इति । नन्वर्थवादरूपत्वान्नाय
सर्गकालः । सत्यमेवं पूर्वत्रापि ह्यर्थवादसरूपतैव किं तूभयत्रा
विधित्वमाचार्येण वाक्यान्तराद्वा कुतश्चित् ॥ ९३ ॥

नानाबीजेष्वन्त्ये सामर्थ्यात् ॥ ९४ ॥

नानाबीजेष्टयां किमन्त्ये वाग्विसर्जनमुताद्ये? यथा देवसू
षु। तत्र हविरावपनस्य यतवाक्त्वं धर्मः । शूर्पादानादेर्व्याभाष
एकैकं च हविस्तुषविप्रमोकान्तं कर्त्तव्यम् । पदार्थस्यैतावत
तत्र यद्याद्ये वाग्विसर्गः शूर्पादानादेर्व्याभाषणधर्मानुग्रहः। अथा
विरावपनस्य यतवाक्त्वधर्मानुग्रहः । तत्र नियमानियमयोर्निय
मर्थ्यादन्त्य एव वाग्विसर्गः । न हि शूर्पादानादेर्व्याभाषणधर्म
मः। इतरत्र यतवाक्त्वं नियतं इति ॥ ९४ ॥

बृहद्ग्रावेति मुसलमादत्ते ॥ ९५ ॥

हविष्येषु मुसलमिति वाक्यशेषः ॥ ९५ ॥

स इदमित्यवदधाति ॥ ९६ ॥

स चायं मन्त्रः स इदामिति चोदितार्थाभिधायकत्वात् पितृयज्ञे विपरिणम्यते । वचनलिङ्गयोस्तु कृतं व्याख्यानम् ॥ ९६ ॥

हविष्कृदेहीति त्रिराह्वयति ॥ ९७ ॥

हविष्कृदेहीत्यनेन मन्त्रेण त्रिः संशब्दयति हविः संस्कर्त्रीं पत्नीमग्नीधं वा ॥ ९७ ॥

अतः पत्न्यवहन्त्यन्यो वा ॥ ९८ ॥

अत इत्यवाच्यं पाठक्रमादेव तत्सिद्धेः । वाच्यं वा । प्रवृत्तावघातस्याह्वानप्रज्ञापनार्थत्वात् । तत्कुतो वचनसामर्थ्यात् । हविष्कृदेहीति त्रिरवघ्नन्नाह्वयतीति । अन्यशब्देन च नर्त्विक्व्यतिरिक्तोन्य उच्यते । अन्यस्याप्रकृतत्वात् । ऋत्विजां च परिक्रीतत्वात् । सूत्रकारप्रस्थानाच्च । ऋत्विजां वैको प्रकृतत्वादिति । तेनाध्वर्युव्यतिरिक्तोन्यः परिगृह्यते । स चाग्नीत्सान्निकर्षात् । समाख्यानुग्रहाच्च । ब्रह्मापीति चेत् । न, तस्य वेदत्रयविहितकर्मसम्बन्धात् समाख्यानुग्रहाभावात् । भवति चाग्नीधोध्वर्युसमाख्यानम् । आश्विनमध्वर्यवो भक्षयन्तीति प्रकृत्याम्नायते । त्रय आश्विनं भक्षयन्ति अध्वर्युः प्रतिप्रस्थाताग्नीध्र इति । तस्मादन्यशब्देनाग्नीदभिधीयते ॥ ९८ ॥

आह्वयत्याहन्त्यन्यो दृषदुपले कुक्कुटोसीति त्रिः शम्यया द्विर्दृषदꣳ सकृदुपलाम् ॥ ९९ ॥

हविष्कृदाह्वानं कुर्वत्यध्वर्यावन्यो दृषदुपले आहन्ति । शम्यया करणभूतया । द्विर्दृषदꣳ सकृदुपलाम् । कुक्कुटोसीत्यनेन मन्त्रेण । अन्य इति कुतो वचनात् । स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्तीति । एष इति सर्वनामशब्देनाध्वर्योः परामर्शात्तदेको दृषदुपले सामाहन्तीत्येकशब्दोग्नीद्विषयः । ततश्च वचनादग्नीध आहनने कर्तृत्वम् । न विरोधादुपधानवत् । तत्र ह्यनागृहीतकर्तृविशेषकं वचनं स वै कपालान्येवान्यतर उपदधाति दृषदुपले अल्पतर इति । इह पुनर्गृहीतः कर्तृविशेषः । अथ हविष्कृतमुद्वादयतीति

समाख्ययाध्वर्युः स यत्रैव हविष्कृतमुद्वादयति तदेको दृषद्
समाहन्तीति । तस्मान्न विरोधादग्नीदिति । प्रयोजनमध्यापूर्वं
ध्वर्यावग्नीदेवावहन्ति इति । ननु च द्विर्दृषदं सकृदुपलामित्युक्ता
त्रिरित्यवाच्यम् । स्यादेतदेवं यदि त्रिशब्दो हन्तिना सम्बध्यते ।
तु मन्त्रेणाभिसम्बध्यते । त्रिःकुक्कुटोसीति । द्विर्दृषदि सकृन्म
प्रयोगे प्राप्ते एकद्रव्ये कर्मावृत्ताविति मन्त्राभ्यासार्थोयमारम्भः ॥
न्त्यभि सम्बन्धे पुनः त्रिशब्दस्यानुवादत्वं स्यात् । स चाय
ष्टोपकारकः पदार्थ इति । वक्ष्यत्युत्तरत्र तथा च सति याव
निवर्त्तते ॥ ९९ ॥

वर्षवृद्धमसीति शूर्प्पमादत्ते ॥ १०० ॥

अवहन्ताऽभिप्रवृत्तत्वात् ॥ १०० ॥

प्रतित्वेति हविरुद्वपति ॥ १०१ ॥

स एव ॥ १०१ ॥

परापूतमिति निष्पुनाति ॥ १०२ ॥

अपहतमिति तुषान्निरस्यति ॥ १०३ ॥

अध्वर्यु रनवघातशेषत्वात् । न चैषा प्रसिद्धिर्यदवहन्ता तु
न्निरस्यतीति । प्रतिपत्तिश्चैषा । तदभावेऽभावः ॥ १०२ ॥ १०३ ॥

वायुर्व इति विविनक्ति ॥ १०४ ॥

पृथक् करोति । तण्डुलान् कणांश्च वितुषी करणाय ॥
चैतद्विविक्तीकरणं तुषनिरासनात्पूर्वं प्रतिपत्तव्यम् । सामर्थ्यात्
षनिरसनं ह्येवं सति भवति । उक्तं च विरोधेर्थस्तत्परत्वादिति ॥
त्क्रमश्च यथाश्रुतीत्यदोषः । स चायमवघातः कृष्णाजिनादाना
तुषविप्रमोकान्तः । तत्र नानाबीजेष्ट्यां हविरावपनमुसलयोजन
द्वपननिष्पवनविवेकीकरणानि भेदेन मन्त्रवन्ति । हविष्पर
न्मन्त्रस्य । शेषं तन्त्रेण ॥ १०४ ॥

देवोव इति पात्र्यामोप्याभिमन्त्रयते ॥ १०५ ॥

हविष्यान् । नानाबीजेष्ट्यां च सन्निपातात्तन्त्रेणाभिमन्त्रणम् १ ॥ १०५ ॥

त्रिः फलीकरोति देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमित्येके ॥ १०६ ॥

फलीकरणं कणविमोकः । तच्च कर्त्तव्यं देवेभ्यः शुन्धध्वमित्यनेन मन्त्रेण । वीप्सा प्रतिफलीकरणमन्त्रावृत्तिपरा । न हि प्रतिप्रहारं मन्त्रावृत्तिर्युज्यते । पितृयज्ञे च पितृभ्यः शुन्धध्वमिति विपरिणामः ॥ १०६ ॥

फलीकृत्य कणान्निदधाति ॥ १०७ ॥

फलीकृत्येत्यवाच्यम् । पाठक्रमादेवतत्सिद्धेः । स्यात्प्रतिफलीकरणं कणनिधानं यथास्यादिति ॥ १०७ ॥

पेषणोपधाने युगपत् ॥ १०८ ॥

स वै कपालान्येवान्यतर उपदधाति हषदुपले अन्यतर इति हि प्रकृत्य समामनन्ति । तद्वा एतदुभयं सह क्रियत इति । तत्र पेषणमन्तरङ्गत्वादध्वर्युः करोति । बहिरङ्गत्वात् चोपधानमग्नीदेव वर्त्तयति २। तत्र श्रुतिपठानुसारेण पूर्वमुपधानमुच्यते ॥ १०८ ॥

धृष्टिरसीत्युपवेषमादायापाग्न इत्यङ्गारान्प्राचः करोति ॥ १०९ ॥

उपवेषोऽङ्गारापोहनसमर्थं काष्ठम् । तद्धृष्टिरसीत्यादाय अपा-

---

१ परेतु नानाबीजेष्ट्यां भेदेन मन्त्रपाठमिच्छन्ति कालभेदात् ।

२ अध्वर्योः पेषणकार्ये व्यापृतत्वात् । ततश्च यत्र विरोधो नास्ति यथा वरुणप्रघासेषु अध्वर्योर्मेषकरणे प्रतिप्रस्थातुश्च करम्भपात्रमेषीकरणे तत्रोभयोर्यथास्वं स्वयमेव कर्परोपधानं, नाग्नीधः ।

ग्न इत्यनेन मन्त्रेण प्राचोऽङ्गारानुदूहति । तच्चैतदङ्गारापोह
शरेचनार्थं रिक्ते हि देशे कपालानि यथोपधीयेरन्निति। एवं च
चर्विष्ट्यामपोहनाभावः । धानाभर्जनस्य च देशरेचनकृतोपका
वात् । अङ्गारेषु ह्यधिश्रयणमुभयोरपि प्रसिद्धम् । केचिदनेन
णाङ्गारनिरसनमेव कुर्वन्ति । मन्त्रलिङ्गात् । अपाग्ने अग्निम
जहि निःक्रव्यादꣳ सेधेति अपजह्याग्निमामादं निषेध च क्रव्या
ति । वाक्यशेषाच्च । एतावेवैतदुभावतोपहन्तीति । तदेतदनु
मविधानात् । विध्यन्तरशेषत्वाच्च । अस्तिह्यत्र विध्यन्तरम् । ते
चोऽङ्गारानुदूहतीति । मन्त्राणाञ्चाविधायकत्वमुक्तम् अत उदू
त्रमेव । अपिचाग्न्युत्सर्गे दोषो दृश्यते वीरहा वा एष
योऽग्नीनुत्सृजतीति ॥ १०९ ॥

आदेवयजमित्यङ्गारमाहृत्य कपालेनावच्छादयति
ध्रुवमसीति ॥ ११० ॥

यद्यपि चाङ्गारे द्वितीया कपाले च तृतीया । तथाप्यङ्गा
निष्प्रयोजनत्वात्कपालस्य च प्रयोजनवत्वात् कपालार्थतैवा
स्य । कपालधर्मोऽपि च सन् तं मध्यमेन कपालेनाभ्युपदधातीति ॥
मसंयोगात्तद्धर्म एवायं न कपालमात्रधर्मः । न च भर्जने प्रवर्त्त
अङ्गारेषु हि तस्याधिश्रयणम् । आपितृयजं वहेति च पितृयज्ञे
रिणामः । ननु चायमसमवेतवचनः । न ह्यत्र देवा इज्यन्त
तेन देवयाट्त्वं यथाकथञ्चिदत्रोच्यते । देवेज्यार्थहविःश्रप
या देवयाट्त्वमस्यापि भवति । यथा च देवयाट्त्वं तथा म
नुवदति । तस्मात्समवेतवचनः ॥ ११० ॥

अमुष्येति द्विषच्छब्दे ऽभिचरन् ॥ १११ ॥

अमुष्य वधायेति अभिचरन्नामातिदिशति । द्विषच्छब्दमप
सचायं द्विषच्छब्दो न स्वरूपतो गृह्यते किं तर्हि द्विषच्छब्दा
पि । एवं च सतीह भ्रातृव्यशब्दे व्यादेशः सिद्धो भवति ॥ ११
किमिहैव द्विषच्छब्दे भिचरतो नामादेशः । नेत्युच्यते—

अन्यत्रापि ॥ ११२ ॥

अतोऽन्यत्रापि अभिचरतो द्विषच्छब्दे नामादेशः कर्त्तव्यः । यथा द्विषतो बधोऽसि भ्रातृव्यमवबाध इत्येवमादि ॥ ११२ ॥

संव्याङ्गुल्याशुन्येङ्गारं निदधात्यग्ने ब्रह्मेति ॥११३॥

अभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवतीति श्रूयते । स चायं कपालसंस्कारत्वात्प्रतिकपालमावर्त्तते । गुणविभक्तिनिर्द्दिष्टमपि स्यात् प्रयोजनवत्वात्कपालमेव संस्कार्यमागारे गावो वास्यन्ताम्, प्राकारे कुसुमानीति वत् । भर्जनेपि चोपरिष्टादङ्गारः प्रवर्त्तत एव । अदृष्टार्थत्वात् । चरोस्त्वकपालकार्यापत्तेर्न तद्धर्मप्रवृत्तिः ॥ ११३ ॥

धरुणमिति पश्चात् ॥ ११४ ॥

कपालमुपदधातीति वाक्यशेषः ॥ ११४ ॥

१पुरस्ताद्धर्त्त्रमिति ॥ ११५ ॥

२विश्वाभ्य इति दक्षिणतः ॥ ११६ ॥

प्रथमं कपालमङ्गीकृत्येतरत्र दिङ्नियम उच्यते—

समं विभज्य द्वे दक्षिणत एवमुत्तरतश्चित-स्थेति ॥ ११७ ॥

समं विभज्य चितस्थेत्यनेन मन्त्रेण द्वे दक्षिणत एवमुत्तरत उपदधाति प्रदक्षिणक्रमयोगेन । स्मार्त्तं चैतत्प्रदक्षिणं न श्रौतं तत-श्च तदपचारे स्मार्त्तमेव प्रायश्चित्तं भवति । समं विभज्येत्यवाच्य-म् । द्वे दक्षिणत एवमुत्तरत इति स्वशब्दाभिधानात् । स्यादग्नीषो-मीयार्थत्वात्त् । तत्र हि समविभागानुक्तावधिकं दक्षिणत इति न वि-

---

१ ' धर्त्त्रमसि दिवम् ' इत्यनेन मन्त्रेण पुरस्तात् पूर्वस्यां दिशि-कपालमुपदधाति ।

२ ' विश्वाभ्यस्त्वाशाभ्य ' इत्यनेन दक्षिणतः दक्षिणभागे कपालं स्थापयति ।

भागाधिकं स्यात् । तत्र को दोषः । संख्याधिक्यमप्याशङ्क्येत । ... पुनः समविभाग उक्ते यदधिकं विभागस्य दक्षिणत उपधानं सि... भवति ॥ ११७ ॥

तूष्णीं वा ॥ ११८ ॥

न चितश्चेति ॥ ११८ ॥

एवमेकादशाग्नीषोमीयस्य ॥ ११९ ॥

कपालान्युपदधातीति शेषः १ ॥ ११९ ॥

---

१ इदमत्राकूतम् । एतानि सर्वाणि कपालानि निरन्तराणि सं... श्लिष्टानि समानि चोपधेयानि यथान्तरा भूमिर्न दृश्यते । अत्र म... ध्यमपङ्क्तिकपालानि द्व्यङ्गुलानि समचतुरस्राणि; एवं च षडङ्गु... दीर्घा मध्यमापङ्क्तिः । दक्षिणोत्तरपङ्क्ती तु किञ्चित्ततो न्यूने ... पुरोडाशस्य कूर्माकारोक्त्या वृत्ताकारत्वप्रसिद्धेर्यावत्कपालं प्रथ... विधेश्च तदर्थकपालचितेरपि अर्थात् वृत्ताकारताया गम्यमानत्व... त् । ऐन्द्राग्ने चतुर्थोपधानानन्तरं समविभागेन चत्वारि दक्षिणतश्च... त्वार्येवोत्तरतः । अत्र कपालचितिक्षेत्रं मध्यमाश्वशफप्रमाणम् । षडङ्गु... वृत्तं कृत्वाततः प्रागपच्छेदेन समं त्रेधा विभज्य मध्यमभागस्य ति... र्यगपच्छेदेन त्रेधा विभागः कार्यः, दक्षिणोत्तरभागयोस्तु खण्ड... चन्द्राकारयोः पुरोडाशकपालसङ्ख्यानुरोधेन तिर्यग्विभागः । त... षट्कपाले दक्षिणो भागो द्वेधा उत्तरे त्वेकमेव कपालं खण्डचन्द्रा... कारमुत्तरभागप्रमाणम् । सप्तकपाले दक्षिणो भागस्त्रेधा, उत्तर ए... कधा । अष्टाकपाले दक्षिणो भागस्त्रेधा उत्तरो द्वेधा । नवकपा... ले दक्षिणश्चतुर्धा उत्तरो द्वेधा । दशकपाले दक्षिणश्चतुर्धा मध्यमो... त्तरौ त्रेधा । एकादशकपाले दक्षिणः पञ्चधा इतरौ त्रेधा । द्वाद... कपाले दक्षिणः पञ्चधा मध्ये त्रेधा उत्तरश्चतुर्धा । त्रयोदशकपा... दक्षिणः षड्धा उत्तरश्चतुर्धा, मध्यमः सर्वत्र त्रेधैव । एकं कपा... चेत्तत्पाणिसंमितम् । द्विकपाले वृत्तस्य तिर्यगपच्छेदेन द्वेधा वि... भागः । त्रिकपाले वृत्तस्य तिर्यक्समं त्रेधा विभागः । चतुष्...

अधिकं दक्षिणतः ॥ १२० ॥

विभागाधिकं यत्तद्दक्षिणत उपधेयं क्रमेणैव न सर्वोपधानादुत्तरं स्मृत्यनुग्रहात् ॥ १२० ॥

भृगूणामित्यङ्गारैरभ्यूहति ॥ १२१ ॥

कपालानीति शेषः । स चायं मन्त्र एककपाले विपरिणस्यते । तपसा तप्यस्वेति· वचनस्य समवायात् । द्विकपाले च तप्येथामिति । अभ्यूहनं च कपालावतापनार्थम् । तप्तेषु कपालेषु यथापुरोडाशः पच्येत । एवं च सति कपालविध्यन्तग्राहिणोपि धानाभर्जनस्य नाङ्गारैरभ्यूहनं भवति । प्रसिद्ध्यभावात् । अधस्ताद्धि तस्य सन्तापनं प्रसिद्धमिति ॥ १२१ ॥

उपसर्जनीरधिश्रयति ॥ १२२ ॥

उपसर्जनी शब्देन संयवनार्था आप उच्यन्ते । तदधिश्रयणं च तप्ताभिः पिष्टानां मार्दवं यथा स्यादिति । एवं च सति पुरोडाशपाकार्था एवैताः । ततश्च यत्र श्रपणं तत्रोपसर्जन्यधिश्रयणमपि कार्यम् । पितृयज्ञे च दक्षिणाग्नौ श्रपणाविधानात् मन्थक्षीरोपसर्जन्यधिश्रयणमपि तत्रैवेति सम्प्रदायः । अत्र पुनरधिश्रपणे कृते उपकारो मन्थे त्वेषितव्यो । न ह्युपसर्जनीगतेनोष्मणा सक्तूनां पाक उपजन्यते । पिष्टानामिव पुरोडाशे । तस्मादनधिश्रयणमेव न्याय्यतरमिवाभाति । करम्भपात्रेषु चैवम् । ननु चोपधानसमनन्तरं युगपदुपक्रमाभिधानात्पेषणमभिधेयम् । इतरथा हि प्रकृतपरित्यागोऽप्रकृतोपदानं चायुक्तं स्यात् । तेनोपसर्जन्यधिश्रयणविधानस्यायमनवसर इति । उच्यते । उपधानवत्पेषणेन

---

पाले वृत्तसमं प्राञ्चमपच्छिद्योत्तरभागस्य त्रेधा विभागः दक्षिणत एकम् । पञ्च कपालेऽपि वृत्तं प्राञ्चं द्वेधापच्छिद्योत्तरभागस्य त्रेधा विभागः दक्षिणस्य द्वेधा । कपालानि तु घर्षणाद्युपायेन तथा करणीयानि यथा कपालचितिक्षेत्रं वृत्तं सम्पूर्यत इति याज्ञिकादिभाष्येषु ।

सह यौगपद्यं यथा स्यादित्येवमर्थमिहाभिधानम् । तथा च श्रि
धादग्नीध एव कर्तृत्वमत्रापि । यत्र तु विरोधो नास्ति यथा च
ष्ट्यां तत्राध्वर्योरिवोपसर्जन्यधिश्रयणे कर्तृत्वम् । अपरे तूपध
समनन्तरमुपसर्जन्यधिश्रयणाभिधानस्य प्रयोजनान्तरं व्याच
न्ति । यत्रोपधानं तदधिश्रयणमपि तत्रैवाधिकाराद्यथा स्यादि
एवं चोपसर्जन्यानयकाल एव तासामधिश्रयणम् ॥ १२२ ॥

कृष्णाजिनमादत्ते पूर्वत्प्रतिकृष्णाजिनम् ॥ १२३

कृष्णाजिनस्य यत्पूर्वं धर्मजातमुपदिष्टम् आदानादि स
शून्यकरणान्तं तदिहातिदिश्यते । तुल्यश्रुतित्वात् । तच्चैतत्पेषा
र्थत्वादपेषणे न स्यात् ॥ १२३ ॥

तस्मिन्दृषदं धिषणासीति ॥ १२४ ॥

तस्मिन्कृष्णाजिने दृषदमुपधाति धिषणासीत्यनेन
न्त्रेण ॥ १२४ ॥

पश्चाच्छम्यामुपोहत्युदीचीं दिव इति ॥ १२५ ॥

उपरिष्टाद्वाक्यशेषात् । हनू एव दृषदुपले जिह्वैव शम्
जिह्वासंस्तुतिरन्तरालवृत्तिसामान्येन । न वाविरोधात् । विरुध्यते
परिशम्ययोपहितया पेषणम् । किं चान्यदधस्तादुपहिता दृषदः
ष्प्रवणतामुपजनयतीति निश्चलीकरोति । अतोऽदृष्टार्थत्वादधस्ता
पधानम् । लिङ्गाच्च । स ये जघनेन शम्यां पिष्यमाणानामवशी
न्ते पिष्टानि वा तण्डुला वेति । अधस्तादुपहिताया एतद्भवति न
रि । जिह्वासंस्तुतिरुपधानक्रमापेक्षया ॥ १२५ ॥

दृषद्युपलां धिषणासीति ॥ १२६ ॥

पेषणार्थत्वादुपलायां दृषद्येवोपधानं प्राप्नोति । तेन श
या न दृषद्युपधानमिति । अभिहितन्यायसंसूचनार्थं द
ग्रहणम् ॥ १२६ ॥

धान्यमसीति तण्डुलानोप्य पिनष्टि प्राणायत्वेति प्रतिमन्त्रम् ॥ १२७ ॥

धान्यशब्दः सत्वकेषु व्रीह्यादिषु रूढः । यद्यपि च धिनोतेर्धान्यमित्यवयवार्थो गम्यते । तथापि प्रत्ययस्य विशिष्टार्थविषयत्वात् गोशब्दवद्रूढिशब्दत्वम् । एवं च सति लक्षणया तद्विकारप्रकाशनं शब्दस्य । यवगुलिका अपि तद्विकार एवेति मन्त्रः प्रयुज्यत एव । शाक्यानामयने च तरसमयाः पुरोडाशा भवन्तीत्यत्र तरसमसीति मन्त्रो विपरिणस्यते । धान्यशब्दस्य जातिनिमित्तत्वात् । ननु च प्रकृतौ प्रकृतिद्रव्यशब्देन धान्यविकारद्रव्याभिधानादत्रापि तरसप्रकृतिद्रव्यशब्देन मृगोसीत्यभिधानं कर्त्तव्यम् । एवं हि तत्र वचनं संस्थिते संस्थितेहनि गृहपतिर्मृगयां याति स तत्र यान् मृगान् हन्ति तेन तरसमयाः सवनीयाः पुरोडाशा भवन्तीति । तरसस्य मृगः प्रकृतिद्रव्यम् । नैतदेवम् । प्रकृतौ ह्याम्नानसामर्थ्यात् धान्यशब्देन लक्षणया तण्डुलाभिधानम् । इह पुनः स्वायत्ते प्रयोगे नावाचकशब्दप्रयोगो युज्यते । तस्मात्तरसमसीत्येव प्रयोगः । पिनष्मीति चाध्याहारः साकाङ्क्षत्वात् ॥ १२७ ॥

दीर्घामिति कृष्णाजिने प्रोहति ॥ १२८ ॥

प्रक्षिपति पिष्टानि । प्रोहनं च पिष्टस्य सतः । नानाबीजेषु चैकैकं प्रोहणान्तं कर्त्तव्यं प्रसिद्धेः ॥ १२८ ॥

चक्षुषे त्वेतीक्षते ॥ १२९ ॥

पिष्टानि इति चाध्याहारः । साकाङ्क्षत्वात् । ईक्षणं च द्रव्यसंस्कारत्वात्तण्डुलानामपि चर्विष्ट्यां प्रवर्त्तते १॥ १२९ ॥

पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम् ॥ १३० ॥

---

१ वाजप्रसवीयजुहोतौ चयने; वाजपेये च सर्वौषधीनामिति देवादिभाष्येष्वधिकम् ।

पिंषन्ति पिष्टान्यभान्धते कपालान्यथैक आज्यं निर्वपन्ति
तुल्यकालश्रवणात् । अत्रान्यशब्देन कैश्चिद्यजमानोभिधातुमिष्यते
अध्वर्य्वग्नीधौ हि पेषणोपधानयोर्व्यापृताविति । तथा च सूत्रका
प्रस्थानम् । निरुप्याज्यं वेदोसीति यजमानो वेदं करोतीति । तदेत
युक्तमिवाभाति । यत्कारणम् । यत्किञ्चिदिह कर्त्तव्यं तत्सर्वमृत्वि
ग्भिः परिक्रीतत्वादृत्विजाम् । अतोन्यशब्देन ब्रह्माभिधीयते । अ
न्य इत्यध्वर्युसन्निकर्षादृत्विगेव गृहीतुं न्याय्यो न यजमानः । सूत्र
कारप्रस्थानाच्च । वचनविरोधाभ्यामन्य इति । यत्पुनरुक्तं निरुप्या
ज्यं वेदं करोतीति तत्रापि न समानकर्तृकतार्थः क्त्वाप्रत्यय
देशः । न ह्यत्राज्यनिर्वापविधानं अन्यत्र विहितत्वात्
तेनानिर्ज्ञातकालस्य वेदबन्धस्य कालं लक्षयितुं क्त्वाप्रत्ययवि
कारो ल्यप् प्रयुक्तः । यथान्यत्र निरुप्याज्यं प्रातर्दोहमन्यस्मिन्निति
तस्माद् ब्रह्मैवाज्यं निर्वपेत् । निर्वापश्च पात्रान्तरे [1]प्रक्षेपणाम ॥१३

पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्ये-
त्वेति ॥ १३१ ॥

पात्र्यामावपनं संयवनार्थम् । ततश्च चर्विष्ट्यां तण्डुलानां पा
त्र्यामनावपनम् । संयवनाभावात् । सपवित्रता चादृष्टोपकारिणी
चरावपि भवति ॥ १३१ ॥

[2]श्रपणस्य पश्चादुपविशत्यन्तर्वेदि वा ॥ १३२ ॥

अन्तर्वेदिग्रहणाच्छ्रपणोऽत्र गार्हपत्योभिप्रेतः ॥ १३२ ॥

उपसर्जनीरानयत्यन्यः ॥ १३३ ॥

---

१ पात्रान्तरमाज्यस्थाली । तस्यालक्षणमुक्तं छन्दोगपरिशिष्टे—
"आज्यस्थाली च कर्तव्या तैजसद्रव्यसम्भवा ।
महीमयी वा कर्तव्या सर्वास्वाज्याहुतीषु च" इति ।
२ सपवित्रां पात्रीमादायेत उत्थाय गार्हपत्यस्य पश्चादुपविशति
अथवा वेद्याः करिष्यमाणाया अन्तर्देशे उपविशतीत्यर्थः ।

उपसर्जन्यन्यशब्दौ व्याख्यातार्थौ ॥ १३३ ॥

पवित्राभ्यां प्रतिगृह्णाति समाप इति ॥ १३४ ॥

ता आनीयमानाः पवित्राभ्यां प्रतिगृह्णाति समाप इत्यनेन मन्त्रेण । तथा चानीयन्ते यथा मन्त्रान्तेन ग्रहणं भवति । स चायमपामभिधायकत्वात्तत्कार्यापन्ने पयसि दधनि घृते च विपरिणस्यते । उपसर्जन्यानयनं च चरावप्यकार्यलोपात् प्रवर्त्तत एव ॥ १३४ ॥

संयौति जनयत्यै त्वेति ॥ १३५ ॥

तच्चैतत्पिण्डार्थत्वाच्चरौ न भवति ॥ १३५ ॥

१समं विभज्यासꣳहरिष्यन्नालभत इदमग्नेरिदमग्नीषोमयोरिति ॥ १३६ ॥

समविभागो दृष्टार्थः । तत्सहावघ्नाति तत्सहपिꣳषन्ति तत्पुनर्नानाकरोतीति दृष्टार्थावगमात् । ततश्चैकस्मिन्न प्रवर्त्तते । केचिदाग्नेयालम्भात् दृष्टार्थैभिर्निर्वृत्ते अग्नीषोमीयाभिलम्भनमदृष्टायेति मन्यमाना विकृतावग्नीषोमीयविकार एककेप्याग्नावैष्णवादौ आलम्भमिच्छन्ति । तत्पुनरयुक्तम । दृष्टार्थत्वात्तस्य । विभागपूर्वको ह्यालम्भः एवं ह्युक्तम् । तत्पुनर्नानाकरोतीति । तस्मादेकके ऽनालम्भः । समं विभज्यालभत इतीयतापि सिद्धे यदसंहरिष्यन्निति सूत्रयति तद्यस्य यस्य यदा संहारस्तस्य तस्य तदालम्भो यथास्यादिति । यथा चरूणां फलीकरणान्ते पौष्णस्यावेक्षणान्त इति ॥ १३६ ॥

यथा देवतमन्यत् ॥ १३७ ॥

कृतव्याख्यानम् ॥ १३७ ॥

इषे त्वेत्याज्यमधिश्रयत्यन्यः ॥ १३८ ॥

---

१ द्वौ पिण्डौ कृत्वा पुनर्मिश्रणमकरिष्यन् क्रमेणैतौ पिण्डावालभत इत्यर्थः ।

अन्यश्चात्र ब्रह्माभिधीयते । पुरोडाशयोर्ह्यध्वर्य्वग्नीधौ क…
तौ । ऋत्विक्कर्तृकत्वं च कर्मणः परिक्रयाम्नानादित्युक्तम् । …
मानं च परिभाषितमेव, प्रधानः स्वामी फलयोगादित्येवमादि । …
रोधाच्च प्राप्त एव ब्रह्मणि यदन्यग्रहणं करोति तदविरोधेऽप्युपस…
ब्रह्मैव यथा स्यादित्येवमर्थमिति सम्प्रदायः । अपरे त्वन्य इति न्य…
सूत्रमाहुः । विरोधादेवान्यप्राप्तेः । एवं ह्याह । तद्वा एतदुभयं …
क्रियत इति प्रकृत्यार्द्धोह वा एष आत्मनो यज्ञस्य यदाज्यमर्द्धो …
ह हविर्भवति स यश्चासावर्द्धो य उ चायमर्द्धस्ता उभावग्निं गम…
वेति । एवं चाविरोधेऽध्वर्योरेवाधिश्रयणं स्यात् ॥ १३८ ॥

अपत्नीकस्याहवनीये तच्छ्रापिणः ॥ १३९ ॥

अपत्नीक इति नाविद्यमानया पत्न्याधिकाराभावात् । त…
द्विद्यमाना एव पत्न्यपत्नीवत् यदा रजस्वला तदैतत्…
ति । तथाचाह प्रेत्येहनि यस्य पत्न्यनालंभुका स्यात्तामवरुध्य …
तेति । आहवनीयश्रापिणोऽपत्नीकस्याहवनीय एवाज्याधिश्रयण…
एवं ह्युक्तमाहवनीयश्रापिणं प्रकृत्य यस्यपत्नी न भवत्यग्र …
तस्याहवनीयेधिश्रयतीति । इतरस्य तु गार्हपत्य एव १ ॥ १३९ ॥

घर्मोसीति पुरोडाशौ युगपत् ॥ १४० ॥

आज्यस्य पुरोडाशयोश्च युगपदधिश्रयणम् । तद्वा एतदु…

---

१ केचित् अपत्नीको मृतपत्नीक इत्याहुः । तस्याप्येकाकिना…
वाधानं श्रूयते आश्वलायनब्राह्मणे । पत्न्यां मृतायामग्निभिर्दग्ध्वा…
पुनर्विवाहासम्भवे आत्मार्थमग्न्याधानमाहापस्तम्बो दर्शपौर्णमा…
श्रयणार्थे शेषाणि कर्माणि न भवन्तीति । तथा त्रिका…
मण्डनः—

" तस्मान्नयैकदेशेन दग्धव्या पर्वमारिणी ।
पत्नी ज्येष्ठतरा वापि यज्ञपार्श्वे निरूपितम् " इति ।

कर्मप्रदीपे कात्यायनः—

" मृतायामपि भार्यायां वैदिकाग्नीन्न हि त्यजेत् ।
उपाधिनापि तत् कर्म यावज्जीवं समापयेत् " इति ।

सह क्रियत इति ह्युक्तम् । तत्र चाध्वर्युर्मुख्यत्वादाग्नेयमधिश्रयति । अग्नीषोमीयमग्नीत् ॥ १४० ॥

उरुप्रथा इति प्रथयति यावत्कपालमनति पृथुम् ॥ १४१ ॥

यावत्कपालमित्युक्ते ऽति पृथुप्राप्त्यभावात् । निषेधवैयर्थ्यमनतिपृथुमिति उच्यते । कपालपरिमाणसिद्धौ यावत्कपालमिति प्रथनपरिमाणोपपत्तिः स्यात् न तु कपालपरिमाणं सिद्धम् । अतस्तत्परिमाणावधारणायानतिपृथुग्रहणम् । तत्कथं? श्रुतिसंयोगात् । तं न सत्रापृथुं कुर्यादिति प्रकृत्याश्वशफमात्रं कुर्यादित्युहैक आहुरिति । अनेकयजमानके च यथार्थं मन्त्रविपरिणामः । चरौ च कार्याभावात्प्रथनाभावः । यश्च येनाधिश्रितः स तस्य प्रथनाभिमर्शने करोतीतरथा हि तप्तकपालसंयोगाच्छोषणे सति प्रथनमनुपपन्नम् ॥ १४१ ॥

१अग्निष्ट इत्यद्भिरभिमृशति सकृत्त्रिर्वा ॥ १४२ ॥

चरौ न स्यात्कार्यलोपात् ॥ १४२ ॥

पर्यग्निकरोत्यन्तरित; रक्षोन्तरिता अरातय इति सहाज्यम् ॥ १४३ ॥

पुरोडाशाज्यसंयोगात्पर्यग्निकरणस्योपदेशिकत्वाच्च प्रकृतौ धर्माणां सान्नाय्ये ऽप्रवृत्तिः । एवं च तद्विकारे पशौ पर्यग्निकरणविधानमुपपन्नं भवति । प्राक् पर्यग्निकरणात्पिष्टलेपापनयनपात्र्यङ्गुलिप्रक्षालने ऽर्थात्कर्त्तव्ये । न हि तयोरुत्पत्तिश्चोदिता । २प्रतिपत्ति-

---

१ तं पृथुं कृतं पुरोडाशं सोदकेन हस्तेन सर्वतः स्पृशति । पृथने क्रियमाणे यत्र यत्र विदीर्णं भवति तदद्भिः सन्दधाति, सकृन्मन्त्रेण द्विस्तूष्णीम् । " पिष्टलेपेनाविक्षारयन्त्रिः परिमार्ष्टि " इति मानवे । " अद्भिः श्लक्ष्णीकरोत्यनातिक्षारयन् " इत्यापस्तम्बः ।

२ अन्यथाग्निसंयोगात् कालविलम्बाच्च शोषणे सति प्रतिपत्तिकाले क्षालनमतिदुष्करं स्यात् ।

मात्रविधानं त्वस्ति १ । सामर्थ्यादपि च क्रमोत्क
शक्यते ॥ १४३ ॥

२देवस्त्वेति श्रपणम् ॥ १४४ ॥

ददातीति वाक्यशेषः । समर्थ्याच्चरोरधस्तात् ३ ॥ १४

माभेरित्यालभते ॥ १४५ ॥

तच्चैतच्छृताशृतसंवित्त्यर्थं । तमभिमृशति शृतं वेदा
श्रूयते । प्रयोजनं धानानामभावोऽभिमर्शनस्य दर्शनस्य दर्शनात
संवित्तेः । मन्त्रो दर्शन एवास्त्विति चेत् । नालम्भेऽपि सामर्थ्य
प्रापितत्वात् । अतस्तदकार्यापत्तिः । चरौ च स्यादकार्यलोप
लम्भः ॥ १४५ ॥

अतमेरुरिति शृतावभिवासयति भस्मना वेदेनोपवे
षेण वा ॥ १४६ ॥

अशृतयोः श्रपणप्रदानार्थं शृतग्रहणम् । इतरथा ह्यवाच्यं
दिति । भस्मनाभिवासयति आच्छादयति । वेदेनोपवेषेण वा
णभूतेन । विरोधाच्चरावप्रवृत्तिर्वासस्य । अनेकयजमानके मन्
विपरिणामः ॥ १४६ ॥

पात्र्यङ्गुलिप्रक्षालनमाप्तेभ्यो निनयत्यभितप्य
प्रत्यगसः स्यन्दमानं त्रितायत्वेति
प्रतिमन्त्रम् ॥ १४७ ॥

---

१ "पात्र्यङ्गुलिप्रक्षालनमाप्तेभ्यो निनयति, पिष्टलेपाञ्जुहो
इत्यादिना ।

२ "देवस्त्वेत्युल्मुकेनाभितापयति दर्भैस्त्वचं ग्राहयति" इति

३ उपलक्षणमिदं धानानामपि ।

आप्तग्रहणं यागदेवता ज्ञापनार्थम् । इतरथा हि देवतोद्देशाभावे प्रतिपत्तिमात्रमेव स्यात् । अथ पुनराप्तग्रहणे तदुद्देशेन परित्यागः कार्यः । तथा च नाशदोषादौ द्रव्यमात्रमुत्पादयितव्यमिति याज्ञिकाः । अपरे तु द्रव्यप्रधानत्वात्तस्य च नाशे दैवरक्ताः किंशुका इति नोत्पत्तिमिच्छन्ति । अभितप्येति प्राचीस्थमेवोल्कया तापयित्वा । प्रत्यगिति प्रत्यग्वचनान्नप्रागुदग्वा असंस्पन्दमानमिति समुपसर्गनिर्देशादसङ्गच्छत् । न स्पन्दनमात्र प्रतिषेधः । त्रितायत्वेत्येभिर्मन्त्रैः प्रतिमन्त्रम् । निनयामीति वाक्यशेषः ॥ १४७ ॥

## अन्वाहार्यं दक्षिणाग्नावधिश्रयति ॥ १४८ ॥

अन्वाहार्यो दक्षिणार्थ ओदनः । ततो देवा एतां दर्शपूर्णमासयोर्दक्षिणामकल्पयन्यदन्वाहार्यमिति श्रूयते । दक्षिणाग्नावन्वाहार्यं पचतीति विधानात्तत्राधिश्रयणम् । स च भोक्तृतृप्तिव्यवच्छिन्नपरिमाणः स्यात् । परिमाणान्तरानभिधानात् । अन्नस्य च भुज्यर्थत्वात् । भुजेश्च तृप्तिप्रवृत्तिसंयोगात् । अनवधृतपरिमाणत्वान्नेति चेत् । स्यादौचित्यात् । उचिता हि पुरुषाणां प्रसृतित्रयेण तृप्तिरिति । स च लौकिक उदके पच्यते । सामर्थ्यगृहीतत्वात्तस्य । न चेह प्राणीतमुपादिश्यते । परिक्रयार्थत्वाच्चास्य पुरुषार्थरूपता । तस्मान्न प्राणीतोदकसाध्य इति सम्प्रदायः । अपरे व्यावर्णयन्ति । सामर्थ्यपरिगृहीतमपि यदेव सर्वार्थत्वेन प्रकल्पितं तदेव गृहीतुं न्याय्यम् । न च सर्वार्थत्वे कश्चिद्विशेष आश्रयितुं शक्यते पेदमर्थ्यं प्रति । प्राणीतं च सर्वार्थमित्युक्तम् । पुरुषार्थरूपत्वेपि सति क्रत्वभिनिर्वृत्त्यर्थपुरुषस्थितिद्वारेण कर्म सम्बन्धो स्त्येवेत्यदोषः । अथ निर्दिष्टकार्यार्थतैव प्रणीतानां नार्थगृहीतार्थता । तद्यथा हविर्ग्रहणमपः कृत्वा इति, अपः उपस्पृश्येति च । तथासत्यप्राप्तिः स्यात्पाण्योरवनेजने प्राशित्रहरणप्रक्षालने च । अथ कर्मसम्बद्धपात्रसंस्कारः स इत्युच्येत तत्सम्बन्धाविशेषादध्वर्युपाण्योरपि संस्कारः शक्यो वक्तुम् । केवलं तु तत्र कृतप्रयोजनता पात्रस्य । पाण्योरवनेजनं तु करिष्यमाणप्रयोजनम् । न चेयता विशेषः शक्योऽवसातुम् । तस्मात्पाण्योरवनेजनपात्रप्रक्षालनयोः प्राणीतमेवोदकम् । सम्प्रदाये तु पात्रप्रक्षालन एव प्राणीतमुदकमिच्छन्ति न पाण्योरवनेजने । तत्पुनर्विचार्यमाणं ना-

तिसमञ्जसमिव । उभयत्र हि क्रियाक्षिप्तमुदकं न स्वशब्दाभिहि
तस्मादुभयत्र प्राणीतमुदकमिति । अन्वाहार्ये तु द्रव्याक्षिप्तमि
याक्षेपाद्यदि विशेष उपलभ्यते ततोऽस्तु लौकिकमिति ॥ १४८ ॥

अत्र वा व्रतोपायनम् ॥ १४९ ॥

तुल्यश्रुतित्वात् । तुल्यसूत्रारम्भसामर्थ्यात् ॥ १४९ ॥

अपरेणाहवनीयं वेदिं खनति त्र्यङ्गुलखातां व्याम
त्रीं पश्चात् त्र्यरत्निं प्राचीमपरिमितां वा प्राक्प्रवणा
मुदग्वा मध्यसङ्गृहीतामग्निमभि.
तो; सौ ॥ १५० ॥

आहवनीयमपरेणेति । कुतः । वाक्यशेषात् । सोयं विष्
निः छन्दोभिरभितः परिगृहीतोग्निः पुरस्तान्नापक्रमणमासेति
दिरिति संस्कारनामधेयम् । तेषु हि सत्सु शब्दप्रयोगादाहवनी
त् । प्रयोजनं सोमे धर्मप्रवृत्तिरिति । खनतिः करोत्यर्थः । अ
मेवात्राख्यातपदप्रयोगेण भवितव्यम् । तत्र किं सामान्यरूपः क
प्रयुज्यतामुत विशेषरूपः खनत्यादिरिति । तत्र विशेषरूपे खनत
प्रयुज्यमाने सामान्यरूपाख्यातपदप्रयोगमन्तरेणापि कार्यसिद्धेः
त्प्रयोग एव ज्यायानिति खनतीति सूत्रितम् । मानपरिसमूहना
मन्यतमस्योच्चारणमस्त्विति चेत् । ते ऽपि हि वेद्यर्थाः खनत्या
त् । न, अप्रकाशरूपत्वात् । प्रकाशरूपो हि खनतिर्वेदिस्वरूपं प्र
यति न तथेतरे मानादयः । तस्मात्खनतिशब्दः प्रयुक्तः । तथा
त्यत्र वेदिकरणं यथोक्तमिति खनतिशब्दार्थं करोतिनानुवदति
ननाधिकारादाह त्र्यङ्गुलखातां त्र्यङ्गुलपरिमाणं खातमस्या
व्याममात्रीं पश्चात् परिमाणतः । व्याममात्रीं पश्चात्स्यादित्या
वचनात् । त्र्यरत्निं प्राचीम् । अरत्नित्रयपरिमाणा प्राची भ
अपरिमितां वेत्ययमपरिमितशब्दो यद्यपि पूर्वप्रमाणापेक्षया व
रूढितो वर्त्तते । तथापि नञ् समास एवात्र गृहीतव्यः । किं

णम् । एवं हि श्रूयते । नात्र मात्रास्ति यावतीमेव स्वयं मनसा मन्येत तावतीं कुर्यादिति । तेन न परिमिता अपरिमितेति । यथा चाग्नौ अपरिमितेष्टक इति । तत्राप्यपरिमाणमेव शाब्दम् । ते अपरिमिता एव परिश्रित उपदधुरपरिमिता यजुष्मतीरपरिमिता लोकं पृणेति । कुत एतदितिचेल्लिङ्गात् । न वैमे सर्वाणि रूपाणि उपधत्तानि वै वरे च यथनवाभ्यापथेति । अनाप्तिरपरिमाणपक्ष उपपद्यते । इतरथा ह्यतिरेक एव स्यात् । पुनश्चामृतत्वप्राप्तये इष्टका परिमाण आह । षष्टिं च त्रीणि च शतानि परिश्रित उपधत्तेत्येवमादि । तच्चैतदपरिमाणवचने अपरिमितशब्द उपपद्यते नान्यथा । तेनैतौ द्वावेव यज्ञशास्त्रेऽपरिमितशब्दावपरिमाणवाचिनौ । शेषा रूढिवशेन बहुत्वाचका इति । यथा द्वादशदीक्षा अपरिमिता वा । यथा च यूपे ऽपरिमितो वेत्येवमादि । तथा च परिशिष्टकार आह अपरिमितं प्रमाणादभूय इति । प्रत्यस्तमितावयवार्थवृत्तितया अपरिमितशब्दः श्रुत्यैव बहुनि वर्त्तते । अपरिमितपक्षेऽपि च मानं वर्त्तत एव । न ह्यपरिच्छिन्ने देशे खननादि शक्यं कर्तुमिति । प्राक्प्रवणामुदग्वेति । समो हि दर्शपूर्णमासयोर्देशो विहितः । समे दर्शपूर्णमासाभ्यां यजेतेति । तत्र वेदेः प्राक्प्रवणनियमो वाचनिकः । सा वै प्राक्प्रवणा स्यादिति प्रकृत्याह अथोदक्प्रवणेति । मध्ये संह्वारितेति वचनान्मध्ये सङ्गृहिताम् । अग्निमभितोंऽसौ भवतः । तावपि च वेदिशब्दवाच्यावतः खन्येते तावपि । इतरथाहवनीयमपरेण वेदिं खनतीत्यपरत एव खननम् । तथा च सूत्रकारः । अपोह्य बर्हिंषि निदधात्यंशदेशे इत्यंशयोः स्तरणं दर्शयति ॥ १५० ॥

आमूलोच्छेदनादोषधीनाम् ॥ १५१ ॥

वेति सामर्थ्याद्द्रष्टव्यम । न हि त्र्यङ्गुलखातमूलोच्छेदनयोः समुच्चयः सम्भवति । त्र्यङ्गुलस्य ह्यनतिरिक्तमन्यूनं च खातं त्र्यङ्गुलखातमित्युच्यते । अस्मिंश्च पक्षे ॥ १५१ ॥

ओषधीनां मूलान्युच्छेत्तवैब्रूयात् ॥ १५२ ॥

इति प्रैषः । तच्चाग्नीदाहेति वक्ष्यामः । केचित्पूर्वसूत्रमाकारा-
न्तमेव कुर्वन्ति । सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल इति
कारस्याकार आदेशः । छन्दो वद्भावेन सूत्राणाम् । तत्रोत्तरं, मू
वा मूलोच्छेदनादौषधीनामिति स्वशब्दाभिहित एव विकल्पः । न
तदानीं सान्धिकोयमावादेशवकारः । स चायं प्रैषस्तादर्थ्यात्खन
काल एव दातव्यः । केचिदाहुः मूलोच्छेदनान्तता सारस्वतादिवि
या । न हि दर्शपूर्णमासयोर्वेद्यां मूलानि सन्ति कुतस्तदुच्छेदना
ति । अपरे तु मूलोच्छेदनस्य खननपरिमाणविषयत्वादिहापि
न्यन्ते । एवं ह्याह तस्मात् त्र्यङ्गुला वेदिः स्यादिति । पुनश्च तदुक्त
न कुर्यादौषधीनां वै समूलान्युपाम्लोचत्तस्मादोषधीनाममूलान्यु
च्छेत्तवै ब्रूयादिति । ओषधिमूलोचितखननपरिमाणं खयमित्यतदु
भवति । ततश्च सर्वत्र सम्भवात् सर्वविषयता । एवं च प्रकरणा
नुगृहीतं भवति ॥ १५२ ॥

आहार्यपुरीषां पशुकामस्य ॥ १५३ ॥

वेदिपुरीषमपनीयान्यत्पुरीषमाहर्त्तव्यम् । तच्चैतदनुमार्जनात्प्र
सामर्थ्यात्कर्त्तव्यम् । पुरुषार्थत्वाच्च विकृतावप्रवृत्तिः ॥ १५३ ॥

वेदिं परिसमुह्य त्रितृतीयेऽग्नीदुत्तरत उत्करं क-
रोति ॥ १५४ ॥

परिसमूहनोत्करकरणयोरग्नीधः कर्तृत्वं ल्यबादेशसामर्थ्यात् । त्रि
तीयं च सामर्थ्यात् वेदेर्ग्राह्यम् । तच्च पूर्वत्रितृतीयम् । परिशिष्टव
रवचनात् । विपर्यस्योत्तरां स उत्कर इति । आचार्याभिप्रायाच्च । चा
त्वालोत्करावन्तरेण सञ्चर इति । सन्निहितो हि चात्वालस्योत्क
पूर्वत्रितृतीये भवति ॥ १५४ ॥

देवस्यत्वेति स्फ्यमादाय सतृणं सव्ये कृत्वा दक्षि-
णेनालभ्य जपन्तीन्द्रस्य बाहुरिति ॥ १५५ ॥

आदानं सतृणस्य स्फ्यस्यैव तृणस्य सहत्वमात्रम् । सतृणमित

पदिष्टत्वात् । प्रयोजनमन्तराये तूष्णीमेव तृणादानम् । आददे ध्वरकृतं देवेभ्य इति अङ्गप्रधानदेवताविषयो देवशब्दस्तदर्थं हि वज्रस्यादानम् । वेदिनिष्पत्त्यर्थत्वात् । वेदेश्चाङ्गप्रधानदेवतासम्बन्धो हविर्द्धारणार्थतया शक्यते तादर्थ्यं वदितुम् । ततश्च पितृयज्ञे देवपितृभ्य इति विपरिणामः । दक्षिणेनालभ्येत्यवाच्यं सामर्थ्यसिद्धत्वात् । न हि सव्ये कृतस्यान्यथा लम्भः सम्भवति । तेन सव्यपाणिस्थस्यैवालम्भो यथा स्यादिति । अक्रियमाणे हि दक्षिणेनालभ्येत्येतस्मिन् मुक्त्वाप्यालम्भः प्राप्नोति तन्माभूदिति दक्षिण ग्रहणम् । तच्चैतद्वज्रादानं जपश्च स्तम्बयजुर्हरणार्थत्वात्तदभावे न भवति । तादर्थ्यं च तत्सन्निधावाम्नानात् । तत्र चार्थस्य विद्यमानत्वात्सतृणमिति चोपदेशात् तृणस्य हि निःसन्दिग्धं स्तम्बयजुर्हरणार्थत्वम् । स्फ्यस्यापि तद्वत्तदर्थतैव ॥ १५५ ॥

## नोपस्पृशेत्पृथिव्यात्मानौ तेन स्तम्बयजुर्हरिष्यन् ॥ १५६ ॥

प्राक् स्तम्बयजुर्हरणाद्वज्रेण पृथिव्यात्मानौ नोपसंस्प्रष्टव्यौ । एवं हि श्रूयते । यज्ञं प्रकृत्य तेन सꣳशितेन नात्मानमुपस्पृशति न पृथिवीमिति । केचित्त्वेतदनुपस्पर्शनमाकर्म्मपरिसमाप्तेरिच्छन्ति । अविशेषाम्नानसामर्थ्यात् । स्तम्बयजुर्हरिष्यन्निति चोत्तरसूत्रे ऽवयवं योजयन्ति । स्तम्बयजुर्हरिष्यन्वेद्यां तृणं निदधातीत्येवम् । तत्पुनर्नोपपद्यते । न ह्युत्तरसूत्रेण सम्बध्यमानः स्तम्बयजुर्हरिष्यन्नित्यवयवोर्थवान्भवति । स्तम्बयजुर्हरणं हि प्रहरणादिपुरीषनिवपनान्तम् । तत्र पाठादेव वेद्यां तृणं निदधातीयतापि सूत्रेणार्थः सिद्ध्यति नार्थोनेनावयवेन । पूर्वसूत्रे चार्थवत्ता ऽस्यावयवस्य । नोपस्पृशेत्पृथिव्यात्मानौ तेन कियन्तं कालमित्यपेक्षिते स्तम्बयजुर्हरिष्यन्निति कालसमर्प्पणेनार्थवत्तावयवस्य। अपि च वज्रादानस्य स्तम्बयजुर्हरणार्थतेत्युक्तम् । जपस्यापि तत्संस्कारद्वारेण तादर्थ्यमेव । तत्र वाक्यशेषः । सꣳश्यत्येवैनमेतद्यजुर्जपतीति । सꣳश्यति शातनूकरणं तीक्ष्णी करोतीत्येतदुक्तं भवति । पुनश्चाह तेन सꣳ शितेन नात्मानमुपस्पृशति न पृथिवीमिति । तीक्ष्णीकरणस्य स्तम्बयजुर्हरणार्थत्वादनुपस्पर्शनमपि तावदेवेति गम्यते । तस्माद्यथोपवर्णितमेवा-

स्माभिः सूत्रम् । नोपस्पृशेत्पृथिव्यात्मानौ तेन स्तम्बयजुर्हा
र्य्यान्निति ॥ १५६ ॥

वेद्यां तृणं निदधात्युदक्पृथिव्यै वर्मासीति ॥ १५७ ॥

भाविन्या वृत्त्या वेदिः । न ह्यद्यापि संस्क्रियते भूप्रदेशः । तृ
प्रकृतत्वाद्यदात्तं तन्निधेयम् । उदगिति च प्राक्त्वनिवृत्त्यर्थम् । स्त
त्या हि प्रागग्रतोदगग्रता वाप्नोति । तन्निवृत्तौ च श्रौतीयमुदगग्रते
गम्यते । ततश्च तदपचारे श्रौतमेव प्रायश्चित्तं भवति ॥ १५७ ॥

पृथिविदेवयजनीति तृणेऽन्तर्हिते प्रहरति ॥ १५८ ॥

तच्च वज्रेण तदर्थत्वात्तदादानस्य । देवयजनीति वास्य स्था
ने पितृयज्ञे देवपितृयजनीति प्रयोगः । अङ्गप्रधानार्थत्वाद्वेदेरित्यु
क्तम् । पृथिविशब्देन च वेदिरत्राभिधीयते । तत् संस्काराभिप्रवृत्तेः
प्रहरणं च वेद्यां न तृणे अन्तर्हित इति सूत्रितत्वात् । इतरथा हि
तृणे प्रहरतीत्येवमवक्ष्यत् । अथ पुनरन्तर्द्धानवचनात्तादर्थ्यमेव तृ
णस्य न प्रहरणाधिकरणता । तृण एव प्रहरणमिति सम्प्र
दायः ॥ १५८ ॥

व्रजं गच्छेति पुरीषमादत्ते ॥ १५९ ॥

वज्रेणोद्धृतं यत्पुरीषं तद्व्रजं गच्छेत्यनेन मन्त्रेणादत्ते ॥१५९॥

वर्षतु त इति वेदिं प्रेक्षते ॥ १६० ॥

आत्तं पुरीषमिति वाक्यशेषः ॥ १६० ॥

बधानेत्युत्करे करोति ॥ १६१ ॥

प्रहृत्य निदधाति बधान देवसवितरिति श्रूयते ॥ १६१ ॥

प्रहरणशेषो वा विशेषोपदेशात् ॥ १६२ ॥

प्रह्रियते ऽनेनेति प्रहरणं मन्त्रः प्रहरणशब्देनाभिधीयते
तस्य शेष एकदेशः प्रहरणशेषः । कुत एतदविशेषोपदेशात् । प्र
हरणं हि प्रकृत्य अविशेषेणोपदिश्यते । स प्रहरति पृथिविदेवय

न्योषध्यास्ते मूलं मा हिꣳसिषमित्येवमादि तमतो मा मौगिति यावत् । यद्येवं खण्डशोऽध्यवसानं च कथम् । मन्त्रलिङ्गादिति केचित् । एवं चेत्प्रहरणशेषतैव प्राप्नोति । न हि विधायका मन्त्रा इति । लिङ्गमपि च कयाचिद् वृत्त्या प्रहरणशेषभावमुपयास्यति । श्रुतितः खण्डशो विधानमित्यपरे । तथा च सति श्रुतिद्वयसामर्थ्याद्विकल्पो भवति । एवं च सति प्रहरणशेषो वाविशेषोपदेशात् । प्रतिकर्म वा खण्डशः प्रयोक्तव्यो विशेषोपदेशादिति । एवमपि सत्यन्येऽन्यथा वर्णयन्ति । माध्यंदिनपाठेऽविशेषोपदेशात् । शाखान्तरे तु विशेषेणोपदिश्यते । तेनाविशेषस्य विशेषे प्रवृत्तिरविरुद्धा । न तु विशेषस्याविशेष इति । तेन विशेषोपदेशाद्वयवश एव प्रयोग इत्यवधारणा प्राप्नोति । सम्प्रदाये तु विकल्पमेवेच्छन्ति । प्रहरणशेषपक्षश्चेत्तुष्णीं पुरीषादानवेदिप्रेक्षणपुरीषाहरणानि ॥ १६२ ॥

## अपाररुमिति द्वितीयं प्रहरणादि ॥ १६३ ॥

अपाररुमित्यनेन मन्त्रेण प्रहरणादि द्वितीयं कर्मोत्करकरणान्तं प्रतिपत्तव्यम् । अररुर्ह वै नामासुररक्षसमासेति रक्षाभिधायकत्वाद्राक्षसो मन्त्रः । ततश्चोदकोस्पर्शनमत्र भवति । देवपितृयजनाद्बध्यासमिति च प्रयोगः पितृयज्ञे । देवजनं हि वेदिरत्राभिप्रेता । असौ च पितृयज्ञे देवपितृयजनं भवति ॥ १६३ ॥

## अभिन्न्यस्यत्यग्नीदुत्तरमररो दिवमिति ॥ १६४ ॥

अभिन्यासश्च हस्तद्वयेन भवति नैकेन पाणिना । कुत एतल्लिङ्गात् । अभिनिहित एव सव्येन पाणिना भवत्यथ दक्षिणेन जुहूं प्रतिगृह्णातीति । प्रस्तरं स्तृत्वा तमभिनिदधातीति हि प्रकृत्यैवमामनन्ति अभिनिहित एव सव्येन पाणिनेति । पूर्वाभिनिहिते ह्येवकारकरणं समर्थं भवति । इहापि चाभिनिधानमेव चोदितम् । तमग्नीदभिनिदधातीति ॥ १६४ ॥

## द्रप्सस्त इति तृतीयम् ॥ १६५ ॥

प्रहरणादीति वर्त्तते ॥ १६५ ॥

तूष्णीं चतुर्थं सतृणम् ॥ १६६ ॥

सह तृणेन पुरीषमुत्करे करोति ॥ १६६ ॥

पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणेति प्रति मन्त्रम् ॥ १६७ ॥

पूर्वशब्दः सम्बन्धिशब्दः पूर्वं नद्याः कूलमिति यथा । परि... हणं परिग्रहः । यद्येवं परिगृह्णातीति नोपपद्यते । तस्मात्परिग्रहं ... रोतीत्येतदुक्तं भवति । दक्षिणतः पश्चादुत्तरतश्च स्फ्येन करणभूतेन गायत्रेणेत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् ॥ १६७ ॥

वेद्यां त्रिरुल्लिख्याह हर त्रिरिति ॥ १६८ ॥

अयं च मन्त्रः किमियत्तापेक्षया उत त्रित्वविवक्षया । ... श्चातः यदीयत्तापेक्षया वरुणप्रघासेषु हर षट्कृत्व इति प्रयोगो ... द्वित्वात्प्रति वेदि हि तिस्रस्तिस्रो लेखाः । अथ त्रित्वविव... ततस्त्रिशब्दोऽभ्यसितव्यः । न ह्यनभ्यस्ते प्रति वेदि त्रित्वविशिष्टं ह... णमभिहितं भवति । तत्र केचिदाहुरियत्ता विवक्षा । प्रकृतौ ... लेखात्रित्वात्त्रिसंख्या विशिष्टं हरणमभिहितम् । विकृतावपि ... लेखा इति षट्संख्याविशिष्टं हरणमभिधेयमिति । अन्येत्वाहुस्त्रि... ब्दस्य श्रुत्यैव त्रिस्वरूपविषयता । लक्षणयेयत्ता परता स्यात् । ... तिलक्षणा विषयैव श्रुतिर्ज्यायसीति साभ्यासस्त्रिशब्दः प्र... क्तव्यः ॥ १६८ ॥

१हृत्वाग्नील्लेखाः संमृशति ॥ १६९ ॥

हरणसंमर्शने अग्नीत्कर्तृके । क्त्वाशब्दसामर्थ्यात् ॥ १६९ ॥

पितृयज्ञाग्निचित्ययोर्वा तत्र दर्शनात् ॥ १७० ॥

ते चैते पितृयज्ञाग्निचित्ययोः प्रतिपत्तव्ये । कुत एतत् । ...

---

१ एवं प्रेषितोऽग्नीत्ताभ्यो लेखाभ्यः पांसून् त्रिर्हृत्वा उत्करे क्षिप्य लेखाः सम्मर्शनेन समीकरोतीत्यर्थः ।

दर्शनात् । तत्र ह्येते दृश्यन्ते । पितृयज्ञे तावत् । लिखति हरति यद्धार्यं भवति । अग्निचित्यपि च लिखित्वाह हर्तारिति त्रिराग्नीध्र इति । दर्शनमत्र विधानमभिप्रेतं भवति । कुत एतत् । तत्र दर्शनादेव । तत्र हि दर्शनं न विधानमन्यपरत्वाद्वचनस्य । किं परतेति चेत् । पितृयज्ञे तावल्लिखति हरतीति प्रकृत्य स यज्ञोपवीती भूत्वाज्यानि गृह्णातीति। पित्र्यत्वादत्र स्मृत्युदितं प्राचीनावीतमुचितमतो यज्ञोपवीतविधानपरं वचनम् । अग्निचित्येपि च प्रायणीयहविष्कृदन्ते सौमिक्या वेदेः स्फ्यादिसम्मर्शनान्तस्यावसरविधानार्थं वचनम् । वेदिशब्दस्य संस्कारनिमित्तत्वात् । तद्धर्मपरिप्राप्तौ सत्यामवसरो विधीयते। एवं हि तत्र वचनं प्रायणीयं प्रकृत्य, तस्य हविष्कृता वाचं विसृजते, वाचं विसृज्य स्तम्बयजुर्हरति, स्तम्बयजुर्हृत्वा पूर्वेण परिग्रहेण परिगृह्य लिखित्वाह हर त्रिरिति, हरति त्रिराग्नीध्र इति । अतो विकृत्यनुप्रवृत्तिदर्शनात्प्रकृतावुपदेशोऽनुमीयते । किं च स्तम्बयजुर्हरणादिभिः सहोच्चारणात् । तस्मादिह भवति लेखा हरणादि ॥ १७० ॥

## १अत्र वेदिकरणं यथोक्तम् ॥ १७१ ॥

खननमिहावसरे प्रतिपत्तव्यम् । आमूलोच्छेदनात् त्र्यङ्गुलम् वा ॥ १७१ ॥

## उत्तरं परिग्रहं २परिगृह्णाति सुक्ष्मास्योनोर्जस्वतीति प्रतिमन्त्रं पूर्ववत् ॥ १७२ ॥

प्रतिमन्त्रमितीयतापि सिद्धे यत्प्रतीकोच्चारणं करोति, तद्वाक्यावसानप्रज्ञप्तये । इतरथा हि सुक्ष्माचासि शिवाचेत्यत्रापि पर्यव-

---

१ याज्ञिकदेवमते ‘ वेदिकरणं यथोक्तम ’ इत्येव सूत्ररूपम, ‘ अत्र ’ पदं त्वनुवर्तत इति, अत्र मूलं मृग्यम ।

२ अत्रापि ‘ ब्रह्मन् ? उत्तरं परिग्रहं परिग्रहीष्यामि ’ इति ब्रह्माणमामन्त्र्य ‘ओ३म् परिग्रहाण ’ इति तेनाऽनुज्ञातः परिगृह्णाति ।

स्तानं स्यादतः प्रतीकोच्चारणम् । पूर्ववदिति स्फ्येन दक्षिणा-
श्चादुत्तरतश्चेत्येवमर्थम् ॥ १७२ ॥

पुरा क्रूरस्येत्यनुमार्ष्टि१ ॥ १७३ ॥

अनुमार्जनं समीकरणमभिप्रेतम् । पुरीषाहरणपक्षे
स्मिन्नवसरे वेदिपुरीषमपनीयान्यदानीयानुमार्जनं कर्त्तव्यम् ।
मर्थ्यात् । यच्चोक्तं प्राक्प्रवणामुदग्वेति तदप्यस्मिन्नेवावसरे
र्थम् । करणान्तरानुपदेशाच्च वज्रेणैवानुमार्जनम् । प्र
त्वात् ॥ १७३ ॥

अध्यधिवेदिं प्रोक्षणीर्द्धारयति ॥ १७४ ॥

अध्यधिशब्दः सामीप्ये उपरिभावे च । वेदिमिति द्वितीया
दाविभक्तिः । प्रोक्षणी शब्दो यौगिकोपि प्रोक्षणी विशेषविषयः ।
शिष्टशब्दोपादानसामर्थ्यात् ॥ १७४ ॥

अन्योथ स्फ्यमुद्यम्याह प्रोक्षणीरासादयेध्मं बर्हिरुप-
सादय स्रुचः सम्मृड्ढि पत्नीं सन्नह्याज्येनो-
देहीति यदीच्छेत् ॥ १७५ ॥

अन्यशब्देनाग्नीदभिधीयत इत्युक्तम् । अथ शब्दप्रयोगोनर्थ
पाठानुपूर्व्यादपि तत्प्राप्तेः । उच्यते । प्रोक्षणी धारणस्य वज्रोद्यमन
चैककालता यथा स्यादिति । आनन्तर्यार्थत्वादथ शब्दस्य नैकका
लार्थतेति चेत् । स्यात्पाठादपि तत्प्राप्तेः । व्यर्थोथ शब्दप्रयोगो
भूदिति एककालार्थता कल्प्यते । एवं ह्याह स वा उपर्युपर्येव प्रो
क्षणीषुधार्यमाणास्वथ स्फ्यमुद्यच्छतीति । ननु च सप्तम्याप्ययम
र्थो लभ्यते । अध्यधिवेदि प्रोक्षणीर्द्धारयत्यध्वर्यावन्यः स्फ्यमु
म्याहेति सिद्ध्यत्येवैककालता । एवं चेदन्यार्थोयमथ शब्दः ।
ऽन्योसति ह्यथ शब्दे धार्यमाणासु प्रोक्षणीषु सर्वे प्रैषाः प्राप्नु

---

१ 'तां प्रतिमार्ष्टि' इति श्रुतेः । प्रतिशब्दः पूर्वक्रियाविनिमयद्यो
तकः, पूर्वं खननेन विषमां कृतां इदानीं समीकरोति इति श्रुतेरर्थः

न्ति । नान्यथा । इध्मबर्हिः शब्दौ वरुणप्रघासेषु न विपरिणंस्येते । यत इन्धनादिध्मः । एवं चैकस्मिन्नपि काष्ठे प्रयोग उपलभ्यते । इध्मस्य वा शकलमपच्छिद्येति । बर्हिः शब्देतु जात्यपेक्षयैकवचनम् । दृश्यते चैकस्मिन्नपि तृणे बर्हिः शब्दप्रयोगः । बर्हिरंवास्मा एतत्स्तृणात्यस्कन्नं हविरसदिति । इह समुदाय एकवचनान्तो जात्यपेक्षः । ततश्चाविपरिणामः तृणसमुदायान्तरेऽपि सैव जातिरिति । स्रुक्शब्दे बहुवचनस्य समवायाद् गृहमेधीयोपसदादौ यथार्थं विपरिणामः । पत्नीशब्दस्य त्वनेकपत्नीकेऽप्यनूह एवैकवचनान्तस्य समाम्नानात् । आज्येनोदेहीति आज्येन गृहीतेनोद्गच्छेत्येतदुक्तं भवति । प्रैषार्थकतृणगतमपि वचनं समवायाद्यथार्थं विपरिणंस्यते । यथा वरुणप्रघासेषु प्रोक्षणीरासादयतमित्येवमादि । यदीच्छेत्ततः प्रैषो भवति । स यदि कामयेत ब्रूयादेतद्युकामयेतापि नाद्रियेतेति ॥१७५॥

प्रैषप्रैषार्थयोरध्वर्युकर्तृकत्वं विरोधान्न स्यादन्यः प्रैषेऽन्यश्च प्रैषार्थ इति प्राप्त इदमाह—

## यथाप्रेषितमन्यः पराधिकारात् ॥ १७६ ॥

यथाप्रेषितमन्यः करोति । प्रैषवचनसामर्थ्यादेवान्यस्मिन्प्राप्तेऽन्यशब्दोऽग्नीद्विषयः । यथान्यत्राहन्त्यन्य इति । अन्यः करोत्यग्नीत्करोतीति यावत् । कुत एतत् । पराधिकारात् । सामर्थ्यादेव च परप्राप्तौ परशब्दो जघन्यविषयः । परं हि जघन्यं निकृष्टमधिकृत्य प्रैषः प्रवर्त्तत इति । अपि च निकृष्टेनोत्कृष्टस्य प्रैषणं विरुध्यते । न ह्येवमाचरन्ति यदि वाध्वर्युः प्रेषयिताग्नीच्च प्रैषार्थं करोति ततोऽध्वर्युणा किञ्चित्कृतं किञ्चित्कारितं भवति । तथा च सति समाख्यानुगृह्येत । प्रैषार्थस्यः पुनरध्वर्युकर्तृकत्वे कृतमेव न कारितं स्यात् । तत्र नातीव समाख्यानुग्रहः स्यात् । तस्मादध्वर्युः प्रैषेऽग्नीच्च प्रैषार्थ इति ॥ १७६ ॥

एवं प्राप्त उच्यते—

## स्वयं वा अविरोधात् ॥ १७७ ॥

स्वयं वा अध्वर्युः प्रैषार्थं करोति सामर्थ्यादग्नीत्प्रेषयति । कुत एतत् । प्रैषार्थस्य प्राधान्यात् । कुत एतदिति चेत् । प्रैषस्य तदर्थ-

त्वात्। अन्तरङ्गं प्रैषार्थो बहिरङ्गं प्रैषः। प्रैषार्थेन व्यवहितत्वात्
ततश्च यदन्तरङ्गं प्रधानं च तदध्वर्युः करोति। बहिरङ्गं गुण
च्चाग्नीध्रिति न्याय्यम्। ननु च विरुध्यत एतदुक्तम्। न हि नि
उत्कृष्टं प्रेषयितुमलमित्यत आह। अविरोधात्। स्यादयं विरो
यद्ययं प्रैषः स्यात्। अध्येषणात्वेषा। अग्नीदध्वर्युमधीच्छति। यथै
च्चैतच्च कुर्यादिति। प्रेषणाध्येषणयोः को विशेष इति चेत्। नि
विषयं प्रेषणम्। उत्कृष्टविषयमध्येषणमिति। यथा लोके मा
वकः प्रेष्यते काष्ठान्याहरेति। स्वामिनं च प्रत्यध्येषणा स्ना
भुज्यतामिति। वेदेऽपि च एभिरग्ने सरथं याह्यर्वाङ्नारथं
विभवो ह्यश्वा इति। अग्नीधाग्निरधीष्यते ततश्च
विरोधः ॥ १७७ ॥

प्रैषावचनाच्च ॥ १७८ ॥

न च सम्प्रैष वचनमस्ति। यथान्यत्राग्नीदग्नीन्विहरेति
अथवा सम्प्रैषावचनादिति। नैतत्सम्प्रैषवचनं किं तर्ह्यध्येषणमे
दिति। अथ यदुक्तमध्वर्योः प्रैषे सति किञ्चित् कृतं अध्वर्यो
किञ्चित्कारितं तथा सति समाख्यानुग्रह इति। उच्यते। एवं
प्रैषदानक्रियामेव प्रति साक्षादध्वर्योः कर्तृत्वं न प्रैषार्थे। साक्षात्
र्त्रन्तरस्य विद्यमानत्वात्। ननु चोक्तं स्वतन्त्रः कर्तेति प्रकृ
तत्प्रयोजको हेतुश्च कर्त्ता चेति प्रयोजकस्यापि कर्तृत्वम्। नैत
वम्। अन्यकर्तृत्वात्प्रैषार्थस्येत्युक्तम्। कथं तर्हि प्रयोजकस्य क
त्वम्। प्रैषे व्यापारात् क्रियायां चान्यस्य दृष्टत्वात्। तेन कर्तृत्व
बन्धनकार्यार्थं कर्तृत्वमतिदिश्यते। आह च—

प्रेषणे यदि कर्तृत्वं तदर्थेनोपपद्यते।
तत्र चान्यस्य दृष्टत्वात् कर्तृत्वमुपचर्यते ॥

कर्तृनिर्देशकार्यं च कर्तृकरणयोस्तृतीयेत्येवमादि। यथा
पिति सार्वधातुके ङित्वातिदेशो ङिन्निबन्धनकार्यार्थः। न च त
साक्षात् ङित्वं ङकारस्येतोऽभावात्। एवमिहाप्यकर्त्तरि कर्तृत्वा
तिदेशः। तेन समाख्यानुग्रहो नातीवोपपद्यत इति।

प्रयोजकस्य कर्तृत्वं स्याच्चेत्किमतिदिश्यते।
अथातिदेशः कार्यार्थस्तदेव स्यात्प्रयोजनम् ॥

एवं च सति नातीवसमाख्यानुग्रह उपपद्यते । तस्मादध्वर्युः प्रैषार्थमग्नीच्च प्रैष इति । तथा च लिङ्गम् । प्रैषवचनं हि प्रकृत्याम्नायते । स यदि कामयेत ब्रूयादेतद्यद्यकामयेतापि नाद्रियेत स्वयमुह्येवैतत् वेदेदमतः कर्मेति अध्वर्युं प्रैषार्थस्य कर्त्तारं दर्शयति । सूत्रकारानुप्रवृत्तेश्चायमेवार्थोऽवसीयते । हर त्रिरिति प्रैषवचने हि सति हृत्वाग्नील्लेखाः संमृशतीत्याह । तच्चैवमुपपद्यते । यथास्माभिर्न्यायोऽभिहितः । यदा चाध्वर्युः प्रैषदानेऽधिक्रियते । तत्राग्नीधः प्रैषार्थः स्यात् । तथा च सति हृत्वाग्नील्लेखाः संमृशतीत्यवाच्यं स्यात् । आह च—

प्रेषणे यदि कर्तृत्वं तदर्थे नोपपद्यते ।
तत्र चान्यस्य दृष्टत्वात्कर्तृत्वमुपचर्यते ॥
प्रयोजकस्य कर्तृत्वं तदुक्तिं प्रत्यसंशयम् ।
उक्तेरपि च कर्मत्वं उच्यमानतयैव हि ॥
तस्या अपि च कर्तृत्वमुच्यमानप्रबोधनात् ।
उच्यमानस्य कर्मत्वं कर्तृत्वं चार्थसाधनात् ॥
एवं ह्यनेककर्तृत्वं कर्मत्वव्यवधानतः ।
प्रयोजकस्य कर्तृत्वमुच्यमानं न शोभते ॥
प्रयोजकोक्तिस्तस्यैव व्यापारः स्फुट एव हि ।
न तेन व्यवधानं तु पाक एवोदकादिवत् ॥
पच्यर्थः सम्भवत्येव हेतुवाक्यं विनापि हि ।
तेन पूर्वापरीभावो हेतुवाक्यस्य नेष्यते ॥
अङित्वेऽपि हि ङित्वस्य यथादेशः कृतोऽपिति ।
प्रयोजकस्य कर्तृत्वमेवमेवातिदिश्यते ॥
ङिन्निबन्धनकार्यार्थं ङित्वं ह्यङिति भाष्यते ।
कर्तृकार्यातिदेशार्थमकर्त्तर्येवमुच्यते ॥
गुणवृद्धिनिषेधार्थं ङित्वं ह्यङिति कथ्यते ।
अकर्त्तर्यपि कर्तृत्वं तृतीयाद्यर्थमुच्यते ॥
औपचारिककर्तृत्वं न सर्वत्राभ्युपेयते ।
गोरालम्भविधाने हि वाहीको नैव गृह्यते ॥
कर्तृशब्दस्य वाच्यश्चेत्प्रयोज्यो हेतुरेव च ।
एवमप्येकशब्दस्य प्राप्तानेकार्थवाचिता ॥
सत्याङ्गतौ च सा नेष्टा गत्यभावेक्षशब्दवत् ।

साहश्यादिवियुक्तेर्थे युज्यते नैकवाचिता ॥
लोकेपि कारयन्नेव कर्त्तेति व्यपदिश्यते ।
कुर्वाणमेव कर्त्तारमाहुर्नैव प्रयोजकम् ॥
कर्तृशब्दः प्रयोज्ये हि कर्तृत्वादेव वर्त्तते ।
प्रयोजके च सम्बन्धादकर्त्तर्युपचर्यते ॥
शब्दस्यार्थेन सम्बन्धो वाच्यवाचकयोर्द्वयोः ।
अपि शक्ती प्रकल्प्येते प्रत्ययो नान्यथा भवेत् ॥
तेन यत्रान्यसाहश्यं सम्बन्धो वा क्वचिद्भवेत् ।
तत एव प्रतीतत्वाच्छक्तिर्नैवानुमीयते ॥
एवं प्रयोजकेऽध्वर्यौ कर्तृत्वानुनपपत्तितः ।
प्रैषार्थस्यान्यकर्तृत्वात्समाख्यानुग्रहः कथम् ॥
प्रैषप्रैषार्थयोर्येन कर्त्रैकत्वं विरुध्यते ।
अतः कर्त्रन्तरापत्तिः सामर्थ्यादुपजायते ॥
प्रैषार्थस्यान्तरङ्गत्वात्प्रधानत्वाच्च कर्तृता ।
अध्वर्योरिव पश्यामः कातीयवचनाद्वयम् ॥
प्रैषस्य बहिरङ्गत्वाद् गुणत्वेनैव युज्यते ।
अग्नीध एव कर्तृत्वं विपरीतमतोन्यथा ॥
लोकस्य भ्रान्तिनाशाय महान्तं यत्नमास्थितैः ।
कृतेयं न्यायमास्थाय हेतुकर्तृनिराक्रिया ॥ १७८ ॥

प्राक्स्तरणाद्वेदिं नावमृशेत् ॥ १७९ ॥

वेदिं प्रकृत्य ह्येवमामनन्ति । तेनानवमर्शी यजध्वं तथा श्रे-
सो भविष्यथेति ॥ १७९ ॥

शृतानि च हवीꣳष्याप्रचरणात् ॥ १८० ॥

नावमृशेदिति वर्त्तते प्रचरणं च प्रधानविषयम् । न स्वि-
दादि विषयम् । अतदर्थत्वाद्धविषः ॥ १८० ॥

अङ्गुष्ठाङ्गुलिभ्यां माꣳसꣳहिताभ्यामवद्य-
न्त्येके१ ॥ १८१ ॥

---

१ अवमर्शननिषेधात् तत्प्रतिप्रसवार्थोऽयम् ।

मांससंहिते मांससंलग्ने ताभ्यामेके ऽवद्यन्ति । एके काष्ठेन । एवं ह्याम्नानम् । काष्ठेनावद्यतीति । तथा स्रुवेणावद्यति स्वाधितिनावद्यति हस्तेनावद्यतीति । तत्र सामर्थ्यात् स्रुवस्य द्रवद्रव्यविषयता स्वधितेश्च मांसविषयता हस्तकाष्ठयोस्तु पुरोडाशविषयत्वम् । तथा च सूत्रकारः । शृतावदानं पात्रीं चेति । आह च—

सामर्थ्यात्स्वधितिर्मांसे द्रवेषु स्यात् स्रुवस्तथा ।
हस्तकाष्ठे पुरोडाशमवदातुं प्रकल्प्यते ॥ १८१ ॥

आपन्नं स्तृणन्निरस्येत् ॥ १८२ ॥

यद्वेद्यां तृणकाष्ठाद्यापन्नं तत्स्तरणकाले निरसितव्यम् ॥१८२॥

१द्विषतो बध इति स्फ्यमुदञ्चं प्रहरति ॥१८३॥

तदेतददृष्टार्थम् । दृष्टस्यासम्भवात् । प्रधानोपकारकं च प्रयाजादिवत् । ततश्च यावदुक्ते निवर्त्तते ॥ १८३ ॥

२अवनिज्यपाणी अपरेण प्रणीताः स्फ्यं निदधाति ॥ १८४ ॥

पाण्योरवनेजनं दृष्टार्थम् । वेदिखननेन हि धूलीधवलावमलौ क्रियते । प्रयोजनम् तदभावे न भवति । ताववनिज्य प्रणीतानामपरतः स्फ्यं निदधाति ॥ १८४ ॥

इध्माबर्हिश्च ॥ १८५ ॥

समासोक्तयोः क्रमापरिज्ञाने सत्याह—

पूर्वमिध्मम् ॥ १८६ ॥

निदधातीति वर्त्तते ॥ १८६ ॥

---

१ अध्वर्युः प्रैषार्थमुद्यतं वज्रं प्रैषान्ते उदगग्रमुत्करे क्षिपतीत्यर्थः ।
२ हस्तावुत्करेऽद्भिः प्रक्षाल्य प्रणीतानां समीपे एवं स्फ्यमासादयत्यध्वर्युरित्यर्थः ।

प्रणीतादक्षिणेन वाहृत्य ॥ १८७ ॥

१इध्मं निदधाति ॥ १८७ ॥

२स्रुवं प्रतप्य पूर्ववद्वेदाग्रैरन्तरतः प्राक्संमाष्र्च्य- निशित इति विपर्यस्य बहिर्मूलैः प्राङुत्क्रम्य ॥ १८८ ॥

स्रुवं प्रतप्य पूर्ववदिति प्रत्युष्टं निष्टप्तमिति वा । तु- श्रुतित्वात् । वेदाग्रैः करणभूतैरन्तरत इति । मुखतः प्रा- बुध्नादारभ्याग्रात्संमार्ष्टि । अनिशित इत्यनेन मन्त्रेण । विपर्यस्य - हिर्मूलैर्विपर्यासात् प्रत्यगिति लक्ष्यते । बहिर्बाह्यतः । वेद- मूलैः प्राङुत्क्रम्येति । प्राङ्गत्वा । प्राङ्विवोत्क्रम्येति वचना- उत्क्रमणं च सम्मार्गमात्रे । न प्रतपने । तस्मातु तथैव स- ज्याद्यथाग्निं नाभिव्युक्षेत्प्राङ्विवोत्क्रम्येति वचनात् ॥ बहि- मन्त्रः प्रवर्त्तते । देशभेदात्तथा च सूत्रकारः । देशभेदे मन्- वृत्तिं ज्ञापयति । अग्निसम्मार्गे तूष्णीमुपरीति ॥ १८८ ॥

३प्रतप्य प्रतप्य प्रयच्छति ॥ १८९ ॥

---

१ प्रणितानामाहवनीयस्यचान्तरालेन प्रदक्षिणमिध्माबर्हिरा- निदधातीत्यर्थः ।

२ अग्नीत् स्रुवं प्रतप्य अप उपस्पृश्य ततोऽग्निदेशात् प्राङु- म्य प्राच्यां गत्वावेदाग्रैः अग्रे प्रतिपत्तिविधानाद्वेदात् पृथग्भू- अन्तरतो मुखप्रदेशे स्रुवं प्राक् सम्मार्ष्टि; वेदाग्रैर्मूलादारभ्- पर्यन्तमुपरिप्रदेशे प्राञ्चं सम्मार्ष्टि मार्जनेन तत्संलग्नं रजः - तयतीत्यर्थ इति देवः ।

३ यस्य यस्य स्रुवादेः सम्मार्गो विहितो विधास्यते तस्य त- सम्मार्गानन्तरं तत्तत्प्रतप्य प्रतप्याध्वर्यवे प्रयच्छति । अत्रायं क्र- पूर्वं स्रुवस्य प्रतपनम्, ततः प्राङ्गत्वा यथोक्तः सम्मार्गः, पुनः प्र- वृत्य प्रतपनम्, तत उदकोपस्पर्शनमथ समर्पणमिति । अप्रैषपक्षे - ध्वर्योः प्रतपनपक्षेचार्थादग्नीधे समर्पणमिति विशेषः ।

वीप्सा स्रुगादिविषया । ततश्च स्रुगादीनामपि उत्तरं प्रतपनं प्रवर्त्तते । पूर्वं तु स्रुवस्यैव विधानात् ॥ १८९ ॥

अनिशितेति स्रुचः१ ॥ १९० ॥

सम्मार्ष्टीत्यनुवर्त्तते ॥ १९० ॥

तूष्णीं प्राशित्रहरण ; शृतावदानं पात्रींच ॥ १९१ ॥

ननु चावाच्यं तूष्णीमिति । सम्मार्गमन्त्रानुपदेशात् । स्यात्प्रतपनमन्त्रव्युदासार्थत्वात् । तत्प्राप्तिश्च क्रियानिर्देशात् । तच्छेषत्वाच्च मन्त्रस्य । पात्रीमात्रोपदेशसामर्थ्यात् । प्रयोजनवत्वाविशेषाच्च । उद्धरणपात्र्योरिडापात्र्योश्च सम्मार्गः । स च विनियोक्रमेण । क्रमान्तरे; प्रमाणाभावात्२ ॥ १९१ ॥

३सम्मार्जनान्यपास्यति ॥ १९२ ॥

अपक्षिपत्युत्करे । प्रदेशान्तराविधानात् । लिङ्गाच्चोत्करो वा अतिरिक्तस्य प्रतिष्ठेति ॥ १९३ ॥

४आहवनीये प्रासनमेके ॥ १९३ ॥

---

१ जुहूपभृद्ध्रुवाः ।

२ परेतु यदुक्तमविशेषादुद्धरणपात्र्योरिडापात्र्योश्च तूष्णीं विनियोगक्रमेण प्रतपनादीनीति, तदयुक्तम्, 'पात्रीम्' इत्येकवचनप्रयोगेण पात्रीगतद्वित्वस्याप्रामाणिकत्वात्, आसादनोपस्तारादौ एकस्या एवपर्याप्तत्वात्, शाखान्तरेषु तथैव श्रवणात् । इडापात्र्योस्तु न कुत्रापि सूत्रे सम्मार्गप्रतपने विहिते स्तः, अतस्तयोः सम्मार्गप्रतपने निर्मूले एव । अत एव पित्रभूत्याचार्येणैतयो सम्मार्गानर्हत्वमुक्तम् इति प्राहुः ।

३ सम्मार्गोत्तरं सम्मार्जनसाधनानि ;वेदाग्राणि उत्करे क्षिपतीत्यर्थः ।

४ 'आहवनीये वा' इति देवः । अत्रार्थे 'सम्मार्जनान्यद्भिः संस्पृश्याग्नौ प्रहराति यस्मिन् प्रतपत्युत्करे वा' इत्यापस्तम्बोक्तिः शरणम् ।

तद्धैके स्रुवं समार्जनान्यग्नावभ्याद्धतीति वचनात् ॥

पत्नीं सन्नह्यति प्रत्यग्दक्षिणत उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता परिहरत्यधीवासोदित्यै रास्नेति ॥ १९४ ॥

पत्नीशब्देन यज्ञस्य स्वामिन्यभिधीयते । कुत एतत् । स्मरन्ति हि वैयाकरणाः । पत्युर्नो यज्ञसंयोग इति । तत्रैव रूपं भवति । नान्यत्र । यच्च रजकस्य पत्नी कृषकस्य पत्नी उपचारमात्रं तत् । चिन्तायाः प्रयोजनम् । सन्नहनक्रियाक सम्बन्धान्नाध्वर्युपत्नी गृह्यते । सन्नहनं च सम्पूर्वस्य नहेः। सन् बन्धनमित्यर्थः । प्रत्यग्दक्षिणत इत्यवान्तरदेश उच्यते । स गार्हपत्यस्य । कुत एतत् । श्रुतेः । सा वै न पश्चात्प्राची यज्ञमन्व तेति हि प्रकृत्य तस्माद् दक्षिणत इवैवान्वासीतेत्याह । उप मिति च भूतकालप्रत्ययनिर्देशान्नेदानीमुपवेशनम् । पूर्वमेवोप सन्नह्यति । तस्या अपि च कर्म सन्निधिव्यवस्थानं नाय्यम् मानवत् स्वामित्वाविशेषात् । क्वचिच्च दर्शयति । पत्नी च वत्पत्नी च यथादेशमिति । मुञ्जयोक्त्रेण त्रिवृता मुञ्जमयेन णेन योक्त्रेण सन्नह्यति । तच्च परिहरत्यधीवासोदित्यै रास्ने मन्त्रेण । अधीवास इति बहिर्वासस इति । स वा अभि सन्नह्यत्योषधयो वैवासो वरुण्या रज्जुस्तदोषधीरेवैतदन्तर्दधाति ॥

दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वेष्प इति ॥ १९५ ॥

उत्तरस्य शङ्कुस्थानीयता । प्रतिमोकश्च उपानहौ प्रति इति न्यायेन प्रवपणमुच्यते । ऊर्ध्वमुद्गूहति विष्णोर्वेष्प नेन मन्त्रेण । तच्चैतत्पत्नी सन्नहनं तत्संस्कारात्प्रतिपत्ति व्यम् । यच्चोच्यते सन्नहनं प्रकृत्याथ मेध्येनैवोत्तरार्द्धेनाज्यम इति ततश्चाज्यावेक्षणार्थतावगम्यते । तदप्यर्थवादप्रायम् हि सन्नहनस्याज्यावेक्षणार्थत्वे प्रमाणत्वमस्ति ॥ १९५ ॥

न ग्रन्थिं करोति ॥ १९६ ॥

स वै न ग्रन्थिं कुर्यादिति वचनात् ॥ १९६ ॥

ऊर्जेत्वेत्याज्यमुद्वास्य पत्नीमवेक्षयत्य-
दब्धेनेति[1] ॥ १९७ ॥

ऊर्जेत्वेत्यनेन मन्त्रेणाज्यमुद्वास्य पत्नीमवेक्षयत्यवेक्षणं कारयति । ततश्चाध्येषणा पत्न्याज्यमवेक्षस्वेति । न ह्यन्यथा अवेक्षयितुं शक्यते । अदब्धेनेत्यवेक्षते । यद्यपि चोक्तमवेक्षयत्यदब्धेनेति । तथापि त्वावपश्यामीत्युत्तमपुरुषयोगादवेक्षण एव मन्त्रो नाध्येषण इति । तच्चैतदनेकपत्नीके परार्थत्वादेकैव करोति । पत्न्यभावेपि च पितृयज्ञे[2] द्रव्यसंस्कारानपायादध्वर्युरवेक्षते ॥ १९७ ॥

[3]वेद्यां करोत्यपरं प्रोक्षणीभ्यः ॥ १९८ ॥

निगदव्याख्यातम् ॥ १९८ ॥

आहवनीये वा कृत्वा तच्छ्रापिणः ॥ १९९ ॥

आहवनीये वा कृत्वा तच्छ्रापिणः । आहवनीये वा[4] कृत्वा वेद्यां करोति । तच्च नैवमेवं विकल्प्यते । किं तर्हि व्यवस्थितविभाषेयम् । आहवनीयश्रापिण आहवनीये वा कृत्वा एवं ह्यामनन्ति । अथाज्यमादाय प्राङुदाद्रवति तदाहवनीयेधिश्रयति यस्याहवनीये हवींषि श्रपयन्ति । सर्वो मे यज्ञ आहवीनीये श्रृतोभूदिति ॥ १९९ ॥

---

१ आपस्तम्बः ' सा निमील्यावीक्ष्यानुच्छ्वसन्ती वीक्षत ' इति ।

२ एवं रजस्वलायां प्रसूतायां प्रोषितायां वाऽध्वर्युरेवावेक्षते ।

३ अग्नीत्तदाज्यं नीत्वा आसादितानां प्रोक्षणीनां पश्चाद्वेद्यां करोतीत्यर्थः ।

४ ' अधिश्रपणम् ' इति शेषः ।

सवितुस्त्वेत्याज्यमुत्पुनाति प्रोक्षणीश्च पूर्ववत् ॥ २०० ॥

च शब्दादाज्यं च पूर्ववदेव । न ह्यन्यथाज्योत्पवने पवित्रे प्येते इति । कुत एतादिति चेत् । प्रोक्षणीषु पवित्रे भवतस्ते तत दत्ते ताभ्यामाज्यमुत्पुनातीति । प्रोक्षणीनां पुनः संस्कारः कार्यो प्रयोजनमिध्माबर्हिषोः प्रोक्षणाभावे न भवति ॥ २०० ॥

आज्यमवेक्षते तेजोसीति यजमानो वा ॥२०१

प्रकृतत्वादध्वर्युः ॥ २०१ ॥

स्रुवेणाज्यग्रहणं चतुर्जुह्वां धामनामेति सकृन्मन्त्रः २०२ ॥

स्रुवेणाज्यग्रहणमिति । कुत एतत् । चतुर्जुह्वां गृह्णातीति तेः । चतुः संख्याविशिष्टं च ग्रहणं कथमन्यथोपपद्यते । यदिस्रु न गृह्यते । तत्राप्याज्यस्य नियमः । यद्वाज्यग्रहणं तत् स्रुवेण स्रुवनियमो नाप्युभयनियमस्तथा हि सति दधनि पयसि च स्रु स्याप्रवृत्तिः स्यात् । तत्र को दोषः । स्रुवेणावद्यतीत्येतदुपरुध्ये अथ पुनराज्यनियमे सति स्रुवस्यावदानसाधनत्वेन सामर्थ्याद्द्र द्रव्यादौ प्रवृत्तिरनिवारिता भवति । जुह्वां चतुर्गृहीतं धामनामेत्य मन्त्रेण । सकृन्मन्त्रवचनम् । पारिभाषिकसूत्रात्त्रिः कृत्वो मन्त्रप्र इह विकल्पेन सकृत्वमुच्यते । ननु च परिभाषायामपि न त्रिर्मन्त्र चनमभिहितम् । तत्र हि न्यायतः प्रतिग्रहणं मन्त्रप्राप्ताविदमुक्तं चनादाज्ये मुष्टौ चोत्तम इति । सत्यमेवमपि तु त्रिरेव मन्त्रोभिहि स्यात् । वचनोपसन्यासादेव हि वचनं त्रिस्त्रिरेव यजुषा गृह्णीया ति । तेनात्रित्वप्राप्तौ तदनुसकृत्सकृदेवेति इह सकृत्वमुच्यते । वचनादाज्यइति यदेव सूत्रम् । मुष्टौ चोत्तम इत्युत्तमशब्दस्य मु ना सम्बन्धः । आज्यस्याप्युत्तमसम्बन्धे सति उपभृति सप्तकृ मन्त्रः प्राप्नोति । तथा च न वेदवाक्यं व्यवस्थितम् । तेन वचना ज्य इति पारिभाषिकेनैव वाक्यद्वयोपनिबन्धनं सिद्धम् । न वा

मिह सकृन्मन्त्र इति । सत्यमेतदेवम् । वाक्यद्वयप्रतिपत्त्यर्थस्तु पुनरारम्भः । इतरथा ह्येकवाक्यताप्याशङ्क्येत सकृन्मन्त्रवचनविधिप्रशंसार्थतया त्रिशब्दस्य तन्माभूदित्यतः सकृन्मन्त्रवचनमुच्यते ॥ २०२ ॥

अष्टावुपभृत्यल्पीयोनुयाजाश्चेत् ॥२०३॥

अष्टगृहीतमुपभृति गृहीतव्यम् । जौहवादल्पतरम् । यद्यनुयाजाः सन्ति । इहानुयाजानामवैकल्पिकत्वाद्विकृत्यर्थश्चेच्छब्दः ॥२०३॥

चतुरन्यत्र प्रतिविभागात् ॥ २०४ ॥

अनुयाजवत्कर्मणोन्यत्र अन्यद्रव्यानुयाजके च कर्मणि चतुर्गृहीतमुपभृति ग्राह्यम् । कुत एतत् । प्रतिविभागात् । प्रतिविभागेन ह्युपयोग औपभृतस्य दृश्यते प्रयाजेषु चानुयाजेषु च । तेनोभयार्थतौपभृतस्याध्यवसीयते । ततश्चानुयाजाभावे प्रयाजार्थमेव चतुर्गृहीतं भवतीत्ययमभिप्रायः ॥ २०४ ॥

किञ्च—

पश्चातिथ्यादर्शनाच्च ॥ २०५ ॥

पशौ तावदन्यद्रव्यकेष्वनुयाजेषूपभृति चतुर्गृहीतं दर्शयति । अथोत्पूयाज्यं चतुर्गृहीतं जुह्वां चोपभृति च गृह्णाति पञ्चगृहीतं पृषदाज्यमिति । तथा अननुयाजके कर्मण्यातिथ्यायाम् । अथोत्पूयाज्यं सर्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति न ह्यत्रानुयाजा भवन्तीति । तत्रानुयाजार्थेन द्रव्येण नार्थ इति प्रयाजार्थमेव चतुर्गृहीतं दर्शयति ॥ २०५ ॥

न कृत्स्नोपदेशात् ॥ २०६ ॥

नैतदेवं कृत्स्नं ह्येतदष्टगृहीतमनुयाजार्थत्वेनोपदिश्यते । अथ यदष्टौकृत्व उपभृति गृह्णाति छन्दोभ्यस्तद् गृह्णाति अनुयाजेभ्यो हि तद्गृह्णाति छन्दांसि ह्यनुयाजा इति । एवं चानुयाजार्थस्यैव वचनात्प्रयाजेषु विनियोगः । यथा प्रयाजार्थस्योत्तराघारे ॥ २०६ ॥

यदुक्तं पश्वातिथ्यादर्शनादिति । न तद्दर्शनं किं तर्हि वचनं तत्—

पश्वातिथ्ययोर्वचनात् ॥ २०७ ॥

यदा सकलस्यानुयाजार्थता तदानुयाजाभावे उपभृत्यग्रा प्राप्ते वचनाच्चतुर्गृहीतं विधीयते । प्राप्तिपूर्वकं हि दर्शनं भवति न चेह प्राप्तिरस्तीत्यतो वचनमिदमिति । अत्र वदामः । स्याद देवं यदि कृत्स्नमनुयाजार्थत्वेनोपदिश्येत । न तूपदिश्यते । हि शाखिनां वचनम । यदष्टौकृत्व उपभृति गृह्णाति प्रयाजा याजेभ्यस्तद् गृह्णातीत्युभयार्थतया विधानम् । यत्पुनरुक्तम् । याजेभ्यो हि तद्गृह्णातीति, तदनेनोभयार्थत्वविधानादनुवादः इति । ननु स एव विधिरयमनुवाद. कस्मान्न भवति । न, तेन कलस्यानुयाजार्थत्वे प्रयाजार्थतानुवदितुं शक्या, उभयार्थविधा पुनर्यथाप्राप्तावनुयाजांशोनूद्यत इत्यदोषः । कृत्स्नोपदेशे हि स्यादेता वम् । नायं कृत्स्नोपदेशः । पश्वातिथ्ययोश्च वचनं स्यात् । यद्यु यार्थता न स्यात् । उक्तेन न्यायेनोभयार्थत्वे प्राप्तिपूर्वकत्वाद्दर्शनमे तदिति । किं च वचनं सत्येतस्मिन्न ह्यत्रानुयाजा भवन्तीति हेतुरन मर्थः स्यात् । तस्मादपि दर्शनमेवेति । आह च । उभयार्थविधा चेदितरस्यानुवादता ॥ २०७ ॥

ध्रुवायां च जुहूवत् ॥ २०८ ॥

चशब्दादुपभृति च । किं सिद्धं भवति सकृन्निर्वामन्त्रवचन म । तच्च वचनपरिप्राप्तं त्रिस्त्रिरेव यजुषा गृह्णीयादिति विधा पुनराह तदनुसकृत्सकृदेवेति ॥ २०८ ॥

इध्मं प्रोक्षति विस्त्र्ंस्य वेदिं च बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थिं कृष्णोसीति प्रतिमन्त्रम् ॥ २०९ ॥

इध्मादि प्रोक्षति । कृष्णोसीत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् कथं पुनरिध्मं विस्त्र्ंस्य प्रोक्षति बर्हिश्च प्रतिगृह्य वेद्यां कृत्वा पु स्ताद्ग्रन्थि प्रतिग्रहणं च समर्पणपूर्वकं प्रत्युपसर्गप्रयोगसामर्थ्याति

तथा च वचनम् अथास्मै बर्हिः प्रयच्छन्तीति । इध्मस्याग्न्यर्थस्य प्रोक्षणम् । मन्त्रलिङ्गवाक्यशेषाभ्याम् । अग्नये त्वा जुष्टं प्रोक्षामीति मन्त्रवर्णः । इध्मं प्रकृत्य चाह । तन्मेध्यमेवैतदग्नये करोतीति । प्रयोजनम् । तादर्थ्याभावे न प्रोक्षणम् । यथावभृथेष्ट्यां परिश्रित्सु परिधिसंस्कारार्थस्येध्मकाष्ठस्य वेदेरपि वानेन कारणेन स्तरणाभावे न प्रोक्षणम् । यथा गृहमधीये, तत्रापि हि मन्त्रलिङ्गम् । बर्हिषे त्वा जुष्टां प्रोक्षामीति । तन्मेध्यामेवैतद् बर्हिषे करोति वाक्यशेषः । उपसत्सु तु स्तृताया अप्येकवृत्स्तरणमस्त्येवेति प्रोक्षणं प्रवर्त्तत एव । बर्हिर्मन्त्रः स्रुग्भ्यस्त्वेति समवेतवचनत्वात् स्रुग् द्वित्वैकत्वयोर्विपरिणाम्यते । स्रुगभावे च ज्योतिष्टोमेनूबन्ध्यापक्षे स्रुक्शब्दस्याप्रयोगः ॥ २०९ ॥

शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनमिति ॥ २१० ॥

अत्र शेषस्य द्वितीयान्तनिर्देशात्, मूलानां च सप्तम्या गुणविभक्त्या निर्दिष्टत्वात्, शेषार्थतेति केचित् । नेत्यपरे । वेदवाक्ये हि शेषस्य मूलार्थतैव गम्यते । एवं ह्याह । अथयाः प्रोक्षण्यः परिशिष्यन्ते ताभिरोषधीनां मूलान्युपनिनयतीति तत्संस्कार इव दृश्यते । ता इमा आर्द्रमूला ओषधय इति । किं च प्रयोजनवत् द्रव्यसंस्कारावगतेरिति प्रयोजनवद् बर्हिर्द्रव्यं तदनेन संस्क्रियत इति । सूत्रं च यथावेदवाक्यं नेयम् । यश्चाथ याः प्रोक्षण्यः परिशिष्यन्त इति शेषस्य व्यपदेशः सोपि सामस्त्यार्थः । प्रयोजनं नाशदोषादौ मूलोपनिनयनं कर्त्तव्यमेव ॥ २१० ॥

पवित्रे निधाय प्रणीतासु बर्हिर्विस्रंस्य

पुरस्तात्प्रस्तरग्रहणं विष्णोरिति ॥ २११ ॥

प्रणीतासु निधानं वाचनिकम् । बर्हिर्विमुच्य पूर्वस्मात्प्रदेशात् त्रिमुष्टिप्रस्तरग्रहणं विष्णोरित्यनेन मन्त्रेण । स चायमपच्छेदे मन्त्रः पुरस्ताद्गृह्णातीति वचनात् । ततश्च यत्रापच्छेदो नास्ति तथा पितृयज्ञे परिच्छिन्न एव गृहीतोसाविति तत्र मन्त्रो निवर्त्तते ॥ २११ ॥

ब्रह्मणे प्रदाय सन्नहनं विस्रंस्य दक्षिणस्यां

वेदिश्रोणौ निधायान्यैरवच्छाद्य वेदिं स्तृणा-
त्यूर्णम्रदसमिति त्रिवृत् ॥ २१२ ॥

ब्रह्मणे प्रदाय प्रस्तरं बर्हिः सन्नहनं विस्रंस्य विमुच्य
शास्यां वेदिश्रोणौ स्थापयित्वा अन्यैस्तृणैरेव प्रच्छाद्य वेदिं तृ
दयति ऊर्णं म्रदसमित्यनेन मन्त्रेण । त्रिवृदिति त्रिधातुम् ।
स्य नोदितार्थाभिधायकत्वात्पितृयज्ञे विपरिणामो बर्हिषः ॥ २

उपपत्त्या वा१ ॥ २१३ ॥

२बहुलम् ॥ २१४ ॥

स्तृणाति ॥ २१४ ॥

अधरमूलम् ॥ २१५ ॥

तृणाति अधरमूलानि३ करोति ॥ २१५ ॥

पश्चादपवर्गम् ॥ २१६ ॥

४पश्चाच्चापवर्गः समाप्तिर्भवति । न प्रागुदग्वा । ब्रह्मणे
दृष्टार्थम्, व्यापृतहस्तः स्तरणं कथं नामकुर्यादिति । तेन पितृय
भवति । गृहमेधीयेपि च केचित्स्तरणाभावान्न प्रदानमिच्छ
नेत्यपरं । अस्ति हि तत्र व्यापारः । सन्नहनविस्रंसननिधान

---

१ न त्रिवृत्, अपितु यावतीभिरावृद्धिर्भवति वेदेः स्तरणं
तीभिः कर्त्तव्यमित्यर्थः ।

२ निविडं घनं यथा स्यात्तथाच्छादयतीत्यर्थः ।

३ पूर्वस्तृतस्य बर्हिषो मूलानि पश्चात्तीर्यमाणबर्हिषोऽग्रैः
दनीयानीत्यर्थः ।

४ वेदेः पूर्वभागादारभ्येति शेषः । एकं मुष्टिं वेदेः पूर्वभा
त्वा द्वितीयं मुष्टिं वेदेर्मध्यमभागे पूर्वस्तृतबर्हिषो मूलान्यग्रैरछा
स्तृणाति, ततस्तृतीयं मुष्टिं वेदेः पश्चिमप्रान्ते पूर्ववत् द्वितीय
स्तरणेन सम्बद्धं स्तृणीयात् । अयमेकः प्रकारः ।

दनानि । प्रकृतौ हि तानि प्रवृत्तप्रस्तरेणाध्वर्युणानुष्ठितानि इहापि तद्वत्क्रियेति ॥ २१६ ॥

१प्रवृहन्वा ॥ २१७ ॥

वृहान्निष्कर्षे, निष्कृष्य अथो अपि प्रवर्हं स्तृणीयादिति वचनात् । अस्मिंश्च पक्षे मन्त्रावृत्तिं नेच्छन्ति । स्तरणक्रियासात त्यात् । इतरत्र प्रतिमुष्टिक्रियाविच्छेदान्मन्त्रावृत्तिरिष्यते । स्तरणद्रव्यान्यत्वात् । यद्यपि च स्तीर्यमाणैकवेदिविषया स्तरणक्रिया मन्त्रोपि तत्परः । अथापि स्तरणाद्रव्यान्यत्वमात्रमङ्गीकृत्य सूत्रकृता मन्त्रावृत्तिरभिहिता, न ग्रहणलवनस्तरणाद्यग्रहणेष्विति ॥ २१७ ॥

अत्रोद्वासनमाहवनीयश्रापिणः ॥ २१८ ॥

विरोधात् आहवनीयकल्पने हि हवींषि दह्येरन् । यद्येवं कपालो द्वासनमपि कर्त्तव्यम् ॥ २१८ ॥

इध्मात्समिधमादायाहवनीयं कल्पयत्युपरि र्युपरि प्रस्तरं धारयन् ॥ २१९ ॥

उपर्युपरीति सामीप्ये, प्रस्तरं धारयत्समिधाऽऽहवनीयं समर्थं करोति२ । तच्चैतत्समर्थीकरणमग्नेरेव दृष्टार्थत्वात् । नतत्कार्यपत्रानामपां परिश्रितां वा ॥ २१९ ॥

उल्मुके उदूहत्यनुयाजार्थेत् ॥ २२० ॥

अनुयाजार्थमुल्मुकोदूहनम् । तत्संस्पर्शनेन ह्यग्नेरनुयाजा-

---

१ एवं च प्रागपवर्गमेव कृतं भवति । वेदेः पश्चिमपार्श्वे स्तीर्त्वा तस्याग्राणि यष्ट्यादिनोत्पाट्य तेषामधस्तादन्यस्य बर्हिषो यथा मूलानि भवन्ति तथा स्तृणीयात् ।

२ समिदाघातेन क्लृप्तमिन्धनेध्मादेर्ज्वालनसमर्थं करोति । लोकेऽपि काष्ठादिना पूर्वमग्निमाहृत्य पश्चात् सन्धुक्षणं क्रियते, एवमत्रापीति भावः ।

र्थस्यायातयामतोपजन्यते । तत्संस्कारप्रयोजनत्वाच्चोल्मुक
हवनीयानुगमने ततो नानयनं गार्हपत्यादेव प्रणीयत इति । त
पुनरनुसंस्पर्शनविस्मरणेऽनुयाजनिर्वृत्युत्तरकालं, नाहवनीये
स्पर्शनं तदर्थसंस्कारत्वात् । ननु चोत्तरपदार्थार्थमग्निसंस्कार
पीष्यते । तथा ह्याह । ते पुनरनुसंस्पर्शयन्तीति प्रकृत्य अया
ग्नियदत ऊदूर्ध्वमसंस्थितं यज्ञस्य तत्तनवा महा इति । न
लानुयाजार्थत्वात् । तत्कुतो वचनात् । ते वा एते उल्मुकं उदू
नुयाजेभ्य इति । इतरदर्थवादप्रायम् । तथाच सूत्रकारः । अ
जाश्चेदिति । तच्चैतद्यागाभिनिर्वृत्त्यर्थद्रव्यादृष्टसंस्कारत्वा
पि भवति ॥ २२० ॥

परिधीन्परिदधात्यार्द्रानेकवृक्षीयान्बाहुमात्रान्पा-
लाशवैकङ्कतकार्ष्मर्यबैल्वान्पूर्वालाभेपूर्वा-
लाभ उत्तरान् खादिरौदुम्बरान्वा
मध्यमदक्षिणोत्तरान् गन्धर्व इति
प्रतिमन्त्रम् ॥ २२१ ॥

परिधीयन्त इति परिधयः । संज्ञा चैषा यौगिकी । नहि
परिधिशब्दः प्रत्यस्तमितावयवार्थवृत्तितया गवादिशब्दवत्क्व
ढः । न च यूपादिवत् संस्कारनिमित्तता शक्यावसातुम् । सं
राणामविधानात् । गम्यते चात्रावयवार्थः सर्वतो
त्परिधय इति । यूपे त्ववयवार्थो नावगम्यते । तत्संस्काराश्च
ताश्छेदनादयः । तेन तन्निमित्ततावगम्यते यूपशब्दस्य । ननु
सति परिधानात्परिधय इति चत्वारः प्राप्नुवन्ति । नोपदेश
र्यान्मध्यमदक्षिणोत्तरानिति । यत्र तु नैवं विधं वचनं न च चो
नुवृत्तिस्तत्र चत्वार एव भवन्ति । यथा पितृमेधे वारणान्परि
रिधायेति । प्रवर्ग्येपीति चेत् । न, मध्यमश्रवणात् । बहुत्वात्
परिधावुपश्रयति इति त्रयाणां च मध्यमो भवति । पैतुदारवे
तुःसंख्यास्त्विति चेत् । न, सूत्रारम्भसामर्थ्यात्पूर्ववदिति । परि
योगनिमित्तत्वे च परिधिशब्दस्य पितृमेधादौ न धर्मप्राप्तिर्न ह्य

र्मोपलक्षणार्थः परिधिशब्दोऽग्निहोत्रादिशब्दवत् । संज्ञा तर्ह्यनर्थिका । न, संव्यवहारार्थत्वात् । परिधिपरिधानं शकलान्याधाय मत्येति । एकवृक्षीयानिति । उत्तरसूत्रादेवैकजातीयत्वे प्राप्ते एकवृक्षव्यक्त्यर्थमेवैकवृक्षीयग्रहणम् । अपरे तु वचनाभावान्नैवमिच्छन्ति । नह्येकत्वव्यवच्छिन्नवृक्षव्यक्तिपरं वचनमस्ति । अस्ति च जातिपरं वचनम् । ते वै पालाशाः स्युरिति । ननु पालाशादिग्रहणादेतत्सिद्धम् । सत्यमेवम् । अभाव उत्तरानित्युक्तत्वादेकस्य द्वयोर्वाभावे उत्तरजातिर्मा भूदित्येकवृक्षीयग्रहणम् । बाहुमात्रान् बाहुप्रमाणान् । पालाशादीनां पूर्वस्य पूर्वस्यालाभे उत्तरोत्तरस्य ग्रहणम् । स चायं प्रतिनिधिः स्यात्पूतीकादिवत् । न वानर्थप्राप्तत्वात् । न ह्यर्थेन परिधिमात्रं प्राप्नोति येन जातिर्नियम्येत । तस्माद्विधानमेवेदम् । पूतिकेषु तु द्रव्यापचारे सामर्थ्यात्सदृशद्रव्यप्राप्तौ ईषत्सदृशपूतीकनियम उपपद्यते । प्रयोजनं पूर्वाभावेपि न प्रायश्चित्तमिति । खादिरौदुम्बरत्वात्ते चामी खादिरौदुम्बराः अभावभिधानाभावात्पालाशैः सह विकल्प्यन्ते । अपरे तु बैल्वैःसह विकल्पमिच्छन्ति । एवं ह्याम्नायते । ते वै पालाशाः स्युरिति प्रकृत्य यदि पालाशान्न विन्देदथो अपि वैकङ्कताः स्युर्यदि वैकङ्कतान्न विन्देदथो अपि काष्मर्यमयाः स्युर्यदि काष्मर्यमयां न विन्देदथो अपि बैल्वास्युरथो खादिरा अथो उदुम्बरा इति । तेन कार्ष्मर्यमयाभावे बिल्वखादिरौदुम्बरा विकल्प्यन्ते । आह च—

अभावे च पलाशस्य विकङ्कतविधिर्यतः ।
तेन बिल्वविकल्पार्हौःखादिरौदुम्बराविति ॥

मध्यमदक्षिणोत्तरानिति । त्रित्वार्थं क्रमार्थं च गन्धर्व इत्येभिर्मन्त्रैः प्रतिमन्त्रं परिदधाति । त्वाशब्दस्याग्निपरत्वादवभृथे विपारिणाममिच्छन्ति । अग्निपरता च तत्संस्काभिप्रवृत्तेः । सूर्यस्त्वा पुरस्तात्पात्विति च व्यक्तमग्निपरत्वम् । अतोस्यापि तत्परतैवेति । तदेतन्नातीव सुविचार्यालोचितमिव । परिधिपरत्वात्त्वाशब्दस्य । तत्कथमेकवाक्यत्वात् परिधिर्ह्यत्राभिधीयते । गन्धर्वस्त्वा विश्वावसुः परिदधात्विति यजमानस्य परिधिरसीति च स्पष्टैव परिधिपरता तस्मादवभृथेप्यनूह एव । यत्पुनरुक्तं सूर्यस्त्वा पुरस्तात्पात्विति अग्निप-

रतेति। यदि तस्याग्निपरतास्य किमायातम्। अतोयमनुपन्या
इन्द्रस्य बाहुरसि दक्षिण इत्यौपचारिकमेतत्। न तेन दक्षिणदि
स्थितत्वाद्दक्षिण इति। कुतो, लिङ्गात्। एष वै वीर्यवत्तमो य इन्
बाहुर्दक्षिण इति। तेन पितृयज्ञे न विपरिणामः। मित्रावरुणौ
त्तरतः परिधत्तामिति युक्तरूपोत्र विपरिणामः। उत्तरशब्दस्य
वेतवचनत्वात्॥ २२१॥

प्रथमं परिधिꣳ समिधोपस्पृश्य वीतिहोत्रमित्याद-
धाति॥ २२२॥

प्रथमग्रहणं द्वितीयतृतीयव्युदासार्थम्। उपस्पर्शनं च ता
स्कारः। द्वितीयानिर्देशात्। वाक्यशेषाच्च। तेनैतानग्ने समिन्धे इ
प्रयोजनमेवभृथेपि क्रियते। अग्नौ तु समिदाधानं दृष्टार्थम्।
श्चावभृथे न भवति॥ १२२॥

अनुपस्पृश्य द्वितीयाꣳ समिदसीति॥ २२३॥

द्वितीयाग्रहणादुपस्पर्शनमपि प्राप्तं निषिध्यते॥ २२३॥

सूर्यस्त्वेति जपत्याहवनीयमीक्षमाणस्तद्वचन-
त्वात्॥ २२४॥

त्वाशब्दोग्निपरत्वादवभृथे विपरिणम्यते। पुरस्ताच्छब्दश्च
क्परत्वात्पितृयज्ञे सूर्यस्त्वादक्षिणतः पात्विति। सम्प्रदाये त्वस
विपरिणाममिच्छन्ति। तेषामयमभिप्रायः। पुरस्ताच्छब्दोग्रवचनो
दिग्वाचीति। तच्चैतत्परिधिपरिधानाद्यवेक्षणान्तमेकं कर्मकार्य
त्वात्। एकं हि कार्यमग्निसंस्कारः। तत्कुतो, वाक्यशेषात्।
ज्राद्धि वषट्कारात् बिभेमीति प्रकृत्य तद्धमैवैतदग्नये नह्यतीति
तथा गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गो
करोति। एककर्मत्वे च नैमित्तिकमते भवति। अग्निसंस्कारत
दग्निकार्योपन्नास्वप्सु परिश्रित्सु च भवति। ननु च वषट्क
भूतिनिमित्तं परिधानमिति। तेनावषट्कारे जुहोतौ न प्रवर्
इति। नैतदेवम्। न हि कश्चिद्वषट्काराद्बिभेति न च तद्वयं

रिधिभिरपनीयते । तेनाग्निसंस्कारविध्यर्थवादप्रायमेतत् । स चाहृष्टोऽग्निसंस्कारो दृष्टस्यासम्भवात् ॥ २२४ ॥

## १आवृत्य वेदिं बर्हिस्तृणेतिरश्चीनि दधाति सवितुरिति ॥ २२५ ॥

अथस्तीर्णां वेदिमुपावर्त्तते स तृणं आदाय तिरश्चीनि दधाति हि श्रूयते । तिरश्ची इत्युदगग्रे । अत एव प्रागग्रवेदेस्तरणाम् । आवृत्य वेदिमित्यवाच्यम् । सामर्थ्यादेव तत्प्राप्तेः स्याद्वेद्यधिकरणार्थत्वात् । अन्यथा हि न ज्ञायते क्वैते तृणे निधीयेते इति ॥ २२५ ॥

## अन्ये वायुक्तत्वात् ॥ २२६ ॥

अन्ये वा तृणे उपादेये न वेदिसम्बन्धिनी । कुत एतत् । अयुक्तत्वादन्येषां इतरेषां च वर्हिस्तृणानां वेदिस्तरणे विनियुक्तत्वात् । न च विनियुक्तं वचनमन्तरेणार्थान्तरं विनियोगमर्हति । वेदितृणेऽध्वर्युरादत्त इति यथा । नत्वत्रापि वचनमस्ति तस्या द्वे तृणे आदायेति । न । पञ्चम्यभावात् । पञ्चम्या ह्ययमर्थो लभ्यते । षष्ट्यापि ह्ययमर्थो लभ्येत इति चेत् । सत्यं, लभ्यते विभक्तिव्यत्ययेन । अस्तु व्यत्यय इति चेत् । न, न्यायविरोधात । षष्ठ्यर्थस्यासम्भव इति चेत् । सप्तम्यर्थे षष्ठी भविष्यति । एवं चावश्यं भाविनि व्यत्यये न न्यायविरुद्धो विनियुक्तस्य विनियोग आश्रितो भवति । तस्मादप्रकृते तृणे आदाय वेद्यां निदधातीति सूत्रार्थः ॥ २२६ ॥

तथाचोत्तरसूत्रम—

---

१ अध्वर्युर्वेदिं प्रत्यावृत्य आहवनीयसमीपाद्वेदिं प्रत्यागत्य स्तृतस्यैव बर्हिषो द्वे तृणे आदाय मध्ये स्तृतस्य बर्हिष उपरि आहवनीयस्य पश्चात् प्रदेशे तिरश्ची उदगग्रेस्थापयति । आपस्तम्बः ‘ समावनन्तर्गर्भौ दर्भौ विधृती कुरुतः ’ इति, तथा ‘ अन्तर्वेद्युदगग्रे निधायेति ’ च । काठके च ‘ पुरस्तात्प्रस्तरादनन्तर्गर्भौ विधृती आदाय वेद्यामुदञ्चौ निधाय ’ इति । अत एव तिरश्ची इति सूत्रितमिति देवभाष्ये ।

## अन्यत्रापि तृणार्थ इति ॥ २२७ ॥

अतोऽन्यत्रापि तृणार्थे ऽन्यान्येव तृणानि गृहीतव्यानि । य पावीरसीति तृणमादायेति । कुत एतदयुक्तत्वादेव । युक्तग्रहणं दरं करोति । अथस्तीर्णायै वेदेर्द्धे तृणे अध्वर्युरादत्त इति । ननु शये लौकिकमित्यनेनैव सिद्धत्वादवाच्यमेतत् । नैतदेवम् । सर्वार्थनिराकरणविषयम् । सर्वार्थतया ह्यग्निद्रव्ये प्राप्ते अग्निमु समाधाय स्तुवन्तीत्यत्र, उल्कुषीमेवादायोपपरेयादित्यत्र च, लौ कमुपादेय इत्येवमर्थम् । ननु चैवमग्नीनां सर्वार्थता विरोधः निर्दिष्टकार्यसर्वार्थत्वाददोषः । इदं च सर्वार्थत्वात्कार्यविशेषद्र निराकरणविषयम् ॥ २२७ ॥

## यूपाञ्जने च सर्पिः ॥ २२८ ॥

अन्यदेव ग्राह्यम् । प्रकरणे ह्यसंयुक्तविधानात्स्थाल्यस्य स थता तेन पशावपि सर्वार्थमेवैतदाज्यमिति यूपाञ्जनमाशङ्क्यते । धेवं किमिति न भवति । प्राकृतकार्यविशेषसम्बन्धादित्यदोषः । क र्यविशेषसम्बन्धाविशेषादस्य विशये लौकिकमित्यनेन तर्हि पुनर म् । न, तद्वाक्यावगतकार्यविशेषसम्बन्धविषयम् । इदं तु प्रकर वगतमित्यदोषः । अन्यत्रापि तृणार्थ इत्यस्यापराव्याख्या । अन्ये युक्तत्वादित्यनेनैवोपाकरणतृणादिष्वप्यन्यत्वसिद्धाववाच्यमेतदि अतोऽन्यथा व्याख्यायते । अन्यत्रापि तृणार्थे बर्हिस्तृणसदृश ऽन्यानि तृणानि भवन्ति । तत्सादृश्यं च संस्कारैर्भवति । तेभ्योऽ न्यसंस्कृतानीत्यर्थः । कुत एतत् । बर्हिः शब्दस्य जातिनिमित्तत्वा संस्कारनिमित्तताप्याशङ्क्यत एवेति चेत् । संस्कृतेषु बर्हिस्तृ बर्हिः शब्दं प्रयुञ्जते याज्ञिकाः । नासंस्कृतेष्वपि शब्दप्रयोगात्, ब रादाय गावो गता इति । सादृश्यात्सम्प्रयोग इति चेत् । न, इतरे राश्रयप्रसङ्गात् । यदिसंस्कारनिमित्तस्तदा सादृश्याज्जातौ प्रयोग तत्र कथं बर्हिः शब्देन जातिनिमित्तेनैवोद्दिश्य संस्कारविधानमु च्यते । बर्हिरासादयति । बर्हिः प्रोक्षतीति च । जातिनिमित्तत्वे पुनरे दोषो न भवति । तस्माज्जातिनिमित्तः । एवं चेद् बर्हिषा यूपावटं स् णातीत्येवमादौ संस्काराणामप्राप्तिः । अतइदमुक्तमन्यत्रापि तृण

इति । यूपाञ्जने च सर्पिरित्येतदपि केचिदेवं व्याचक्षते । तद्- युक्तमुक्तो ह्ययमर्थो घृतमाज्ये लिङ्गादिति । तस्माद्यथोक्तैव व्याख्या ॥ २२८ ॥

पुरोडाशपयस्याधानासु चेच्छन् ॥ २२९ ॥

पुरोडाशमात्रामैन्द्रवायवे प्रास्यति । पयस्यां मैत्रावरुणा, आश्विने धाना इति । अत्रेच्छया लौकिकानि गृह्यन्ते । इच्छया प्राकरणिकानि । तुल्यशास्त्रत्वाद्विकल्पः । अपरे तु न्यायत एव विकल्पमिच्छन्ति । सवनीययागशेषस्य हविः शेषभक्ष इत्यनेन यजमानाशने विनियोगः । अत्र च पुरुषार्थत्वादभक्षणेऽप्यदोषः । ननु चैवं सतिप्राकृतं चतुर्द्धा करणं कस्मान्न भवति । नान्यत्र विनियोगशासनात् अत इदमुक्तं पुरोडाशपयस्याधानासु चेच्छन्निति१ ॥ २२९ ॥

तयोः प्रस्तरं स्तृणात्यूर्णम्रदसमिति ॥ २३० ॥

तयोर्विधृत्योरुपरि प्रस्तरं स्तृणात्यूर्णम्रदसमित्यनेन मन्त्रेण । अङ्गप्रधानार्थजुहूधारणार्थत्वात् । पितृयज्ञे देवपितृभ्य इति विपरिणस्यते मन्त्रश्चोदितार्थाभिधानात् ॥ २३० ॥

आभिनिदधात्यात्वावसव इति ॥ २३१ ॥

---

१ पितृभूत्याचार्यास्त्वेवं व्याचक्षते ' च शब्दस्तुशब्दस्यार्थे, पुरोडाशपयस्याधानासु तु योऽप्राकृतान्युपादद्यात् स इच्छयैवोपादद्यात् न तु शास्त्रतः, अशास्त्रार्थं एवायम् यत् प्राकृतादन्यस्योपादानम्, कुतः ? पुरोडाशादिषु द्वितीयादर्शनात् पुरोडाशादीनामेवायं प्रतिपत्तिरूपः संस्कारो न ग्रहाणाम्, प्रतिपत्तिश्च विद्यमानानां क्वचिदुपयुक्तानां भवति ; न प्रतिपत्त्यर्थमुत्पाद्यन्ते, अपि चावयवश्रवणान्येतानि; विद्यमानानां चावयवा गृह्यन्ते नावयवार्थमुत्पाद्यन्ते, तस्मात् द्विदेवत्यपात्रेषु प्रतिपादितशेषं यजमानेन भक्षितव्यम्, इति ।

अत्रार्थे जैमिनीयं ' अपनयस्त्वेकदेशस्य विद्यमानसंयोगात्' इति तार्तीयिकाष्टमपादस्थत्रयास्त्रिंशत्सूत्रमपि गमकम् ।

अभिनिधानं पाणिद्वयेन क्रियेत प्रसिद्धिलिङ्गाभ्यामित्यु
त्कराभिन्यासे ॥ २३१ ॥

सव्यासून्ये जुहूं प्रतिगृह्य निदधाति
घृताचीति ॥ २३२ ॥

अभिनिहित एव सव्येन पाणिना भवत्यथ दक्षिणेन
प्रतिगृह्णातीति श्रूयते । प्रतिग्रहणं च समर्पणपूर्वकं प्रत्युपसर्ग
गसामर्थ्यात् । बर्हिषि च श्रुतौ समर्पणे विहिते ऽथास्मै बर्हि
यच्छन्तीति । सूत्रे, तं बर्हिः प्रतिगृह्णाति । घृताच्यसीति मन्त्रश्च
तार्थाभिधानाद्विकृतौ विपरिणम्यते । यथा गृहमेधीयादावना
स्रुगासादने घृताच्यसीति पदद्वयं निवर्त्तते । घृतमंचितम
मिति घृताची । अपरे त्वाहुः । घृतमच्यतेनयेति घृता
तदेतदयुक्तमिव । उपभृति ध्रुवायां चासम्भवात् । न हि ता
घृतमच्यते । चिन्तायाः प्रयोजनं करणपक्षे न विपरिणामः । प्रि
धाम्नेत्यस्याप्यप्रयोगमिच्छन्ति केचित् । धाम शब्दस्याज्यविषयत्व
एतद्वै देवानां प्रियतमं धाम यदाज्यमिति हि श्रूयते । या त्वं घृ
च्यासि जुहूश्च नाम्ना सेदं प्रियं सद आसीद प्रियेण धाम्नाज्येन
सतीति वाक्यार्थः । तदेतदनुपपन्नम् । न हि धामशब्द आज्यवि
धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति
ह्यभियुक्तोपदेशः । तस्मात्प्रियेण धाम्ना भिहिता सतीदं प्रियं
असीदेति । यत्तु धामशब्द आज्ये दृश्यते । स कथं चिदुपचार
प्रतिपत्तव्यः ॥ २३२ ॥

एवमितरे उत्तराभ्यां प्रतिमन्त्रं बर्हिष्युपभृतं
ध्रुवायां चावकृष्टेनुपूर्वम् ॥ २३३ ॥

एव मितरे उत्तराभ्यां प्रतिमन्त्रं बर्हिष्यासादयति । के
तरे इत्यत आह । उपभृतं ध्रुवाञ्च । अनुपूर्वमवकृष्टे मन्त्रा
विधानाद् । बर्हिषीति च प्रस्तरनिरासार्थम् । एवशब्दः प्रति
ग्रहविषयः । समर्पणपूर्वकं यथा स्यादिति । नन्वितरे इत्यु
त्वा पभृतं ध्रुवां चेत्यवाच्यम् । वाच्यं वा स्रुगासादनप्रतिप

त्वात् इतरथा ह्याग्नेयस्यासादनं प्रतीयेत । न गुणत्वादधिकरणस्य । अथ पुनरुपभृद्ध्रुवाग्रहणे क्रियमाणे स्रुगा सादनमेतदिति ज्ञापितं भवति । तत्कथमिति चेद्वचनात् । घृताच्यसि जुहूर्नाम्नेति जुहूं, उपभृन्नाम्नेत्युपभृत, ध्रुवानाम्नेति च ध्रुवाम् । मन्त्रलिङ्गाच्च । जुहूर्नाम्नेत्येवमादि । प्रयोजनमाज्याभावेप्यासादनमिति । अपरे तूपभृद्ध्रुवाग्रहणस्य फलं व्यावर्णयन्ति । पृषदाज्यपात्रस्यासादन व्युदासार्थम् । तत्पुनराचार्येणाभिहितमेवोपभृतासादनमित्युक्त्वा प्रियेण धाम्नेति वा विशेषोपदेशादिति । पृषदाज्यपात्रस्य वावकृष्टत्वव्युदासार्थमुपभृद्ध्रुवाग्रहणम् । तत्कथमनुपभृच्छिकारत्वाद्युपभृतो ह्युपधारणं कार्यम् । न च तत्पृषदाज्यपात्रेण क्रियते । अत एवार्थगृहीतत्वात्तस्य सादनादि न भवति ॥ २३३ ॥

१ पुरोडाशावभिघार्योद्वास्योपस्तीर्णे निधायानक्ति
यस्ते प्राणः पशुषु प्रविष्टो देवानां
विष्ठामनु यो वितस्थे आत्मन्वान्
सोम घृतवान् हि भूत्वाग्नि
गच्छ स्वर्यजमानाय
विन्देति ॥ २३४ ॥

उपस्तीर्ण इति पूर्वतरं द्रष्टव्यम् । तद्भूतोपदेशादुद्वास्योपस्तरणमशक्यं कर्त्तुम् । अभिघारणं हविर्मात्रस्य तत्सम्बन्धेनोपदेशात् । यद्वै हविरभिघारितं तन्मेध्यमिति । सूत्रकारस्तु पुरोडाशेलेक्षयति ॥ २३४ ॥

---

१ अथमत्र क्रमः प्रथमं वेदेन पुरोडाशविभस्मीकरणम्, ततः पात्र्याः स्थापनम्. पुरोडाशयोरभिघारः, पात्र्याः स्थानद्वये उपस्तारः, अथवा प्रथमं पात्र्यामुपस्तारस्ततः पुरोडाशयोरभिघारः, उदगुद्वासनम्, वेदेन पुनर्विरजस्करणम्, स्थापनम्, पात्र्या उपरि प्राणदानमिति देवभाष्ये ।

यथा देवतमन्यत् ॥ २३५ ॥

इति उक्तार्थम् ॥ २३५ ॥

प्रत्यनक्ति कपालानि यानि घर्मे कपाला-
न्युपचिन्वन्ति वेधसः पूष्णस्तान्यपि-
वूतऽइन्द्रवायू विमुञ्चतामिति ॥ २३६ ॥

कपालोद्देशेन विधानसामर्थ्यात्प्रतिकपालमञ्जनम् । युग
शक्यत्वात् । एवं सति यानि कपालानीति बहुवचनमञ्जनक्रिया
च्छिन्नसमुदायापेक्षम् । पात्रप्रोक्षणमन्त्रवत्पूजार्थं वा ॥ २३६ ॥

तूष्णीं वा ॥ २३७ ॥

कपालाञ्जनम् ॥ २३७ ॥

संख्ययोद्वासयति ॥ २३८ ॥

संख्याशब्देन करणभूतेनोद्वासयतीत्येतदुक्तं भवति । त
द्विचार्यते । किमेकमेकमिति प्रयोगः सर्वत्र । उत एक द्वे त्रीणि
उत प्रथमं द्वितीयं तृतीयमिति । एकमुद्वासयामीति प्रतिकपाल
योगः । एकमिति हि संख्याशब्दः च स प्राथम्यादविरोधाच्च स
प्रयुज्यत इति । तदेतदयुक्तम् । न ह्येकशब्दः सर्वत्र प्रयुज्यम
समर्थो भवति । एवं चेदेकं द्वे त्रीणीति प्रयोगस्तथा सति यथ
त्संख्यासंख्येयसम्बन्धात्सामञ्जस्योपपत्तिः । एतदपि नोपपद्यते
हि द्वितीये कपाले द्वित्वविशिष्टमुद्वासनं तथा तृतीये चतुर्थे
अतः पूरणप्रत्ययान्ता संख्या परिगृह्यते । प्रथमं द्वितीयं तृतीय
वमादि । एवं संख्ययोद्वासनं कृतं भवति । यथावत्संख्यासंख्ये
म्बन्धश्च । तथा च कपालनाशसंवित्तेः प्रायश्चित्तवचनमुपपद्य
ननु च प्रथमशब्दस्य द्वितीयापेक्षत्वाद्विकृतावेककपालेऽप्रयो
उच्यते । न विकृतिवशेन प्रकृतौ पदार्थावधारणमुपपद्यते । प्र
वशेन हि विकृताववधारणं युक्तरूपमतो यत्किञ्चिदेतदिति ॥ २३

प्रियेण धाम्नेति हवीꣳषि वेद्यां कृत्वा ध्रुवा अस-

दन्निति सर्वाण्यालभते ॥ २३९ ॥

बहुवचनं स्थाल्यपेक्षया । सर्वशब्दश्च जौहवाद्यपेक्षः । मुख्यक्रमेण वासादनालम्भने । क्रमान्तराभावात् । यज्ञपतिशब्दश्च बहुयजमानके विपरिणस्यते ॥ २३९ ॥

पाहि मामित्यात्मानम् ॥ २४० ॥

आलभत इति वर्त्तते । स चायमात्मसंस्कारः करिष्यमाणप्रयोजनः ।[1]ततश्चाश्वमेधे विरोधात्प्रतिप्रस्थता सवनीयाद्यासादनालम्भने कृते ऽध्वर्युरन्नहोमाभिप्रवृत्त एवात्मानं संस्पृशतीति ॥ २४० ॥

अत्र वा व्रतोपायनम् ॥ २४१ ॥

तुल्यशास्त्रत्वात् ॥ २४१ ॥

इति कात्यायनसूत्रविवरणे कर्कोपाध्यायकृतौ
द्वितीयोऽध्यायः ।

---

१ ततः पशौ सुत्यायां च पुनः पुनर्हविरासादने कृते न भवति ; प्रथमत एव सकृत् कृतेनात्मनः कर्मसमाप्तिपर्यन्तं संस्कृतत्वादिति देवभाष्ये ।

# अथ तृतीयोऽध्यायः ।

१ होतृषदनं कृत्वा परेण वेदिं श्रोणिं वोत्तरेणे-
ध्मात्समिधमादायाग्नये समिध्यमानायानु
ब्रूहीत्याह ॥ १ ॥

होता यस्मिन्त्सीदति तद्धोतृषदनम् । समाचाराद्वेधभि[illegible]
स्यात् । तच्च कुशोत्तरीयम् । उपरिष्टात्तृणानिरसनोपदेशसामर्थ्यात्
कृत्वेति । करोतिरयमभूतप्रादुर्भाववचनः । शब्दसामर्थ्यात् । [illegible]
च कर्ममध्येप्युत्पत्तिर्यूपादीनाम् । स्थापनार्थो वापरेण वेदिमिति [illegible]
देशनिर्देशात् । किं च कृते चोदितत्वात् । प्रक्लृप्तद्रव्यस्य च कर्म[illegible]
भिवृत्तिसामर्थ्यात् । क्रियासातत्याविच्छेदाच्च । यूपादीनां त्वाह[illegible]
वोत्पत्तिश्चोद्यते । तस्माद्वैषम्यमनेन । यत्तु करोतिरभूतप्रादुर्भाव इ[illegible]
तदनैकान्तिकम् । अन्यत्रापि दृष्टत्वात् । पादौ करोतीति संस्कारे
गोमयानि करोतीति संहारे । घटमत्र कुर्विति स्थापने । तस्मात्स्था[illegible]
नार्थ एव । अपरेण वेदिमिति लिङ्गादध्यवसानम् । एषवां लोक [illegible]
त्युदङ्ङेजतीति प्रकृत्याह । अन्तरा वा एतदाहवनीयं च गार्हप[illegible]
चास्त इति । श्रोणिं वोत्तरेणेति तु शास्त्रात् । यद्येवं श्रोणिमुत्तरे[illegible]
वेत्यवधारणा । ननु लिङ्गविरोधः । नोदूगमनविधिशेषत्वात् । एष [illegible]
लोक इत्युदङ्ङेजतीत्यभिधाय संस्तौति । अन्तरा वा एतदाहवनी[illegible]
च गार्हपत्यं चास्त इति । स चोपचारवृत्त्या अन्तरा शब्दोन्तरे वान्त[illegible]

---

१. अध्वर्युर्वेदिमपरेण वेदेः पश्चाद्गार्हपत्याहवनीययोरन्तरा
होतुरुपवेशनार्थं वारणादिवृक्षजं शुष्ककुशैरास्तीर्णमासनं स्थाप[illegible]
त्वा, तत 'एहि? होतर्' इति होतारमामन्त्र्य तत्रागते सति इध्मा[illegible]
देकां समिधं हस्ते गृहीत्वाग्नये समिध्यमानायानुब्रूहीत्येवं होता[illegible]
प्रति ब्रवीतीति सूत्रार्थः ।

ति । इध्मात्समिधं गृहीत्वा अग्नये समिध्यमानायेत्यमुं मन्त्रमाह । स चायमग्निशब्दो जात्यपेक्षः । जातेः पदार्थत्वात् । ततश्च वरुणप्रघासेष्वनूहः । दृश्यते च आसाद्य हवींष्यग्निं मन्थतीति प्रकृत्याध्वर्युरेवाहाग्नये समिध्यमानायानुब्रूहीत्यूहाभावः । तथा प्रतिपराणीयोदेति प्रतिप्रस्थाता सम्मृजन्त्यग्निं सम्मृष्टेग्नाविति । तथाचाध्वर्युरेवाह ब्रह्मन्प्रस्थास्यामि समिधमाधायाग्निमग्नीत्सम्मृड्ढीत्येकवचनान्तोग्निशब्दः । एवं च सति आज्येपि तुल्यत्वादविपरिणाम एव आज्येनोदेहीत्येवमादौ । ननु चाग्निभ्यां प्रह्रियमाणाभ्यामनुब्रूहीति द्विवचनमपि दृश्यते । तच्च जातिपरे नोपपद्यत इति । नैष दोषः । वचनं हि तद्व्यक्तिपरम् । व्यक्तेर्हि जातिशब्दमन्तरेण प्रत्यायनानुपपत्तेरिति ॥ १ ॥

## होतरिति चैके ॥ २ ॥

होतरित्येवं चैक आहुः । तच्चैतद्धोतृपदमनुब्रूहीत्यस्मात्प्राग्वक्तव्यम् । तदुहैक आहुरग्नये समिध्यमानाय होतरनुब्रूहीति वचनात् ॥ २ ॥

## प्रथमस्थानेन प्राक् स्विष्टकृतः[1] ॥ ३ ॥

स्थानशब्दः सवनाभिप्रायः ॥ ३ ॥

## मध्यमेनेडायाः ॥ ४ ॥

स्विष्टकृत्प्रभृतीडान्तं मध्यमेन सवनेन[2] ॥ ४ ॥

## शेषमुत्तमेन[3] ॥ ५ ॥

---

१ सर्वे मन्त्राः स्विष्टकृतः प्राक् स्विष्टकृत् प्रैषा अपि उपांश्वपेक्षया किञ्चिदुच्चैर्भवता स्वरेण प्रयोक्तव्या इति ।

२ प्रयोज्यमित्यध्याहारः ।

३ इडात आरभ्य कर्मापवर्गान्तं सर्वे मन्त्रा उत्तमेन सवनेन प्रयोज्याः । अत ‘ उपांशुप्रयोगः श्रुतेः ’ इत्यस्य दर्शपूर्णमासयोरप्रवृत्तिः । स्वरान्तरविधानात् ।

स चायं सवनधर्म उच्चैर्धर्मकाणाम् । न यजुषाम् । ह्युच्चैर्धर्मस्तस्य तद्गतो विशेषो वक्तुं युज्यत इति ॥ ५ ॥

सन्तत्वन्नित्र मेनुब्रूहीत्याह यजमानः ॥ ६ ॥

स चायं होतृसम्बोधनार्थत्वात् प्रोषितेन न प्रयोक्तव्य- हैव होतृसम्बोधनमन्यः करोति । तदुक्तं गुणेषु प्रतिनिधिः थत्वादिति । सत्रेषु चैक एवानुवदति । न ह्यत्रात्माभिवा दसम्बन्धंप्यात्मनः किं चित्प्रार्थ्यते यदनुच्चारणे यजमा संस्कारपरिलोप आशङ्क्यते । तस्मादेक एवाहेति ॥ ६ ॥

अङ्गुष्ठाभ्यां चावबाधते पाद्याभ्यां वेदमह- ममुमवबाध इति द्वेष्यम् ॥ ७ ॥

अङ्गुष्ठाभ्यां चावबाधते । अवबाधनमाक्रमणम् । च शा यजमानः । इदमहममुमवबाध इत्यनेन मन्त्रेण द्वेष्यम् । एवं अमुमित्यस्यस्थाने द्वेष्यस्य नामादेशः । स च क्रत्वर्थो न पुरु भ्रातृव्यमित्युपदेशसामर्थ्यात् । यदि हि पुरुषार्थत्वं स्यान्न द्वे स्याभावे भ्रातृव्यावबाधनमुपदिश्येत । उपदिश्यते च । तस्म क्रतूपकारार्थद्वेष्यस्यावबाधनमिति निरवद्यम् । पाद्याभ्यां इयमवधारणा । माध्यन्दिनीयायां ह्यविशेषपाठः । तस्मादेता नूच्यमानासु यं द्विष्यात्तमंगुष्ठाभ्यामवबाधेतेति । काण्वीयाया विशेषपाठः । पाद्याभ्यामङ्गुष्ठाभ्यामिति । इष्यते च सामान्य विशेषविषयता । अतो न विकल्पः । पाद्याभ्यामेवेत्यवधार्यत इ इदमहमिति च सत्यप्यात्माभिवादिपदप्रयोगे पुरुषार्थरूपता वात्सत्रेष्वविपरिणामः । अतएवैकः कुर्यादिति ॥ ७ ॥

अभावे द्विषन्तं भ्रातृव्यमिति वा ॥ ८ ॥

द्वेष्यस्याभावे द्विषन्तमवबाधे भ्रातृव्यमिति वा प्रयोग अत्र च क्रत्वर्थेप्यवबाधनं अमुष्येति द्विषच्छब्देभिचरन्नन्यत्रापि भिधानाद्यद्यभिचरन्नामादिशति तत उदकोपस्पर्शनं भवति । च द्वेष्यद्विषतोर्नामादेशोवश्यम्भावी तत्र को विशेषः । उच्च बुद्धिस्थ इति ब्रूमः । यदाभिचारबुद्ध्या नामादेशस्तदैवोदकस्पर्श

म् । न क्रत्वर्थरूपतायामिति । अन्यत्वनेनैवाभिचारमिच्छन्ति । न ह्यत्र वचनमस्ति । यथा वज्राभिमर्शनजपे द्विषतो वध इति । यदि नाभिचरेदित्युक्त्वा यद्यु अभिचरेदमुष्य वध इति ब्रूयादिति । एवं स्फ्योदकप्रहरणेपि वचनम् । तथा स्तम्बयजुर्हरणे यद्यु अभिचरेदमुमतो मा मौगिति ब्रूयादिति । वचनपूर्वकं च तत्सूत्रं अमुष्येति द्विषद्ब्रूदभिचरन्नन्यत्रापीति । न चेह वचनमतोभिचाराभावात्कुत उदकोत्स्पर्शनम् ॥ ८ ॥

## यावत्सामिधेनि वेदेदमहं तावतिथेन वज्रेणेति ॥९॥

प्रयोगार्थमिदमारभ्यते । यावत्यः सामिधेन्योऽस्मिन्कर्मणीति वेद विजानीयादिदमहं तावतिथेन वज्रेणेति[1] । ननु चात्र पञ्चदशैव सामिधेन्यः । तत्र यावत्सामिधेनि वेदेत्यवाच्यम् । सत्यमेवमेव हि ता अभिविधीयन्ते । अथ चैकविंशतिसंख्याप्रवृत्तिज्ञापनार्थम् । एकविंशतिसामिधेनीरपि दर्शपूर्णमासयोरनुब्रूयादिति । इदमहममुमवबाध इत्यत्राभिहित एव इदमहमिति शब्दः । पुनरिहोच्चारणं तावतिथेन वज्रेणेत्यस्यावसरार्थम् । तावतिथ इति च पूरणप्रत्ययान्तः । तावतां पूरणस्तावतिथ इति । पञ्चदशानां पूरणः पञ्चदश इति । यद्येवं पित्र्यायां सामिधेनीत्रित्वे तीयप्रत्ययान्तत्वात्तृशब्दस्य तृतीयेनेति प्रयोगः । उपसत्सु च नान्तादसंख्यादेर्मडिति मट् प्रत्ययान्तत्वान्नव शब्दस्य नवमेनेति प्रयोगः[2] ॥ ९ ॥

## प्रतिप्रणवमाधानम् ॥ १० ॥

सामिधेन्यनुवचनं कुर्वतो होतुः प्रणवे प्रणव इध्माधानं कुर्यात् । स चायं कालार्थः संयोगः उभयोरग्न्यर्थत्वात् । इध्मो ह्यग्नीन्धनार्थः, सामिधेन्योपीध्यमानानुवादिन्यः । न च वचनमन्तरेण गुणयोर्गुणगुणितेष्यते । यत्तु सामिधेनीयाज्या इध्मएवाहुतिरिति स्तु-

---

१ द्विषन्तमवबाध इति शेषः ।

२ तथा च ' इदमहं तृतीयेन, इदमहं नवमेन, इदमहं चतुर्विंशेन, इदमहं एकविंशेन ' इत्यादि पित्र्यायामुपसत्स्विष्टकापशौ प्राजापत्यपशौ च यथासंख्येन प्रयोगः ।

तिमात्रं तत् कालार्थेऽप्युपपद्यते । प्रयोजनं मानुषादपचारादन्त्
यां सामिधेन्यां प्रक्षिप्ते इध्मकाष्ठे सामिधेन्यनूच्यत एवेति । न
चैतदिन्धनाभावे ऽवभृथादौ निवर्त्तते ॥ १० ॥

सामिद्ध इति प्रागतः सर्वमिध्ममेकवर्जमनुयाजाश्चेत् ॥ ११ ॥

समिद्ध इत्यतः प्रतीकात् प्राक् यः प्रणवस्तत्र सर्वमिध्मम
दधाति । एकमिध्मकाष्ठं वर्जयित्वा, यद्यनुयाजाः सन्ति । तच्च
ह वैकल्पिकत्वादनुयाजानां विकृतिविषयम् । समिद्ध इत्यतः
पादानसामर्थ्यात् । केचित्सामिधेनी विवृद्धावागन्तूनामन्त्यायां
ध्मप्रक्षेपमिच्छन्ति । तत्पुनरनुपपन्नम् । प्रकृतौ हि समि
मानो अध्वर इत्यस्याः प्रणवे सर्वेध्मप्रक्षेपः कृतो विकृता
चोदकानुग्रहात्तत्रैव कार्यः । किं च यत्र बहवो धा
भवन्ति तत्रानुपपत्तिः काष्ठानामष्टादशेध्ममित्युक्तपरिमाणत्वा
अथ विवृद्धिरुपगम्यते । सा हि निष्प्रमाणिका स्यात् । न हि सा
धेनीनामिध्मस्य च परस्परतोऽङ्गाङ्गिभावः । तस्मात्समिद्ध इति
गत इत्यत्र श्रुतिरनुकृता । एवं हि श्रवणं समिद्धो अग्न आहुते
प्राचीनं सर्वमिध्ममभ्यादधाति ॥ ११ ॥

अनुवचनान्ते वेदेनाहवनीयं त्रिरुपवाज्य स्रुवेण पूर्वमाघारमाघार्याहाग्निमग्नीत्सम्मृड्ढीति ॥ १

अनुवचनान्तः सामिधेन्यन्त उच्यते । त्रिरेव प्रथमा
त्तमामनवानन्ननुब्रूयादिति हि प्रकृत्य आह । एतदनुवचनमि
अपरे तु कल्पकारान्तराभिप्रायात्सुयजा च यजेत्येतदनुवचनं
न्ते । तदभिप्रायः । अग्ने महां असि ब्राह्मण भारतेत्यादीध्माना
नुवादितया सामिधेन्यनुवचनैकदेशभूतमिति । तदन्ते वेदेनाह
यस्य त्रिरुपवाजनं कृत्वा स्रुवेण पूर्वमाघारमाघारयति । त
पवाजनं प्रसिद्धितादर्थ्याददृष्टार्थम् । उचितं ह्यग्नौ काष्ठान्याधा
नायोपवाजनमिति । धर्ममात्रं वा द्रव्यविशेषनियमाद्वेदेनेति
ख्यानियमाच्च त्रिरिति । न च वेदद्रव्येण त्रित्वविशिष्ट उप

इष्टार्थाभिनिर्वृत्तिः । तस्माद्धर्ममात्रम् । प्रयोजनमवादावपि क्रियते । स्रुवग्रहणं जुह्वा निवृत्त्यर्थम् । होमे हि जुहूः परिभाषितेति । आघारमिति संज्ञानिर्देशः । आघारयेति च ऋज्वादिगुण परिग्रहार्थम् । अत्र च प्रजापतिर्देवता । निरुक्तत्वात्सूत्रकारप्रस्थानाच्च । पूर्वा देवता सामान्यादिति । स्वाहाकारः स्यात्परिभाषितत्वात् स्वाहाकारः सर्वत्रेति । न वा प्रतिषिद्धत्वात् । न स्वाहेति वचनात् । अनिरुक्तं हि मन इति । परिभाषान्यविषया । अग्निमग्नीत्सम्मृड्ढीत्ययं मन्त्रश्चोदितार्थाभिधायी विकृतौ विपरिणस्यते । पदार्थत्वाच्च पूर्वाघारो यावदुक्तं निवर्त्तते । उपवाजनं तु द्रव्यसंस्कारात्प्रवर्त्तत एव ॥ १२ ॥

इध्मसन्नहनैरनुपरिधि सम्मार्ष्ट्यग्ने वाजजिदिति त्रिस्त्रिः परिक्रामम् ॥ १३ ॥

इध्मसंग्रहनैः करणभूतैरनुपरिध्यग्निं त्रिस्त्रिः परिक्रम्य संमार्ष्ट्यग्ने वाजजिदित्यनेन मन्त्रेण । स चायं होमसाधनभूताहवनीयद्रव्यसंस्कारत्वात्सम्मार्गो यावदुक्तेपि प्रवर्त्तते । मन्त्रस्तु चोदितार्थाभिधायित्वादवभृथेष्ट्यां विपरिणस्यते । अत्र केचिदग्निद्रव्याभिधायकत्वात्सकृन्मन्त्रवचनमिच्छन्ति । देशभेदान्नेत्यपरे । परिध्युपलक्षिता हि भिन्ना देशाः । तथा च लिङ्गमथोपरिष्टात्तूर्ष्णीं त्रिरिति । प्रतिदिशं हि मन्त्रप्राप्तौ तूष्णीमिति वचनमर्थवद्भवति । प्रतिदिश तु सकृत्सकृन्मन्त्रवचनमिष्यते । तदुक्तमेकद्रव्ये कर्मावृत्ताविति ॥ १३ ॥

तूष्णीमुपरि ॥ १४ ॥

णमुल्वचनानुवृत्तिसामर्थ्यात्परिक्रम्येत्यत्रापि भवति । अनुपरिध्युपदेशसामर्थ्याद्यथोपाहितमिति केचित् । नेत्यपरे । न ह्ययं परिधिसंस्कारो येनाभिप्रवृत्त्या तत्क्रम आश्रीयते । अग्निसंस्कारस्त्वयम् । तेन प्रदक्षिणोपचारोदक्संस्थता सम्पादनाय प्रथमं दक्षिणं ततः सम्मार्गः ॥ १४ ॥

अपरमाहवनीयादञ्जलिं करोति नमो देवेभ्यः

स्वधा पितृभ्य इति दक्षिणत उत्तानम् ॥ १५ ॥

आहवनीयस्यापरतो नमो देवेभ्य इत्यनेन मन्त्रेणाञ्जलिं क-
रोति । नमस्कारार्थत्वाच्च पुटाञ्जलिं करोति । स्वधा पितृभ्य इत्य-
नेन दक्षिणत उत्तानमञ्जलिं करोति । तदेतदञ्जलिकरणमुत्तराघारार्थं
स स्रुचोत्तरमाघारमाघारयिष्यन्पूर्वेण स्रुचावञ्जलिं निदधाति
वचनात् । प्रयोजनं तदभावे ऽभावः ॥ १५ ॥

अप उपस्पृश्य सुयमेम इति जुहूपभृतावा-
दायोत्तरां जुहूं कृत्वा दक्षिणातिक्रामत्यङ्-
घ्रिणा विष्णविति ॥ १६ ॥

अपामुपस्पर्शनं पित्र्यं मन्त्रमुक्त्वेति परिभाषितत्वादवाच्य-
तः प्राचीनावीत्यादि व्युदासार्थम् । सुयमेम इत्यनेन मन्त्रेण जुहू-
भृतावादत्ते । किं तूत्तरां जुहूं कृत्वा पूर्वतरम् । नन्वेतदवाच्यं पा-
णिभ्यां जुहूं परिगृह्योपभृत्याधानमादानकाल इत्युक्तत्वात् । उच्य-
ते । तत्सर्वविषयम् । एतदुत्तराघारार्थमित्यदोषः । सर्वा-
तयैवात्रापि प्राप्तेरवाच्यतेत्येवं चेत् । मन्त्रवदादानस्योत्तराघारार्थं
ज्ञापयति । इतरथा हि जुहूपभृतोरादानोद्देशेन विधानसामर्थ्यात्
दादानमात्रे प्रवृत्तिराशङ्क्येत । अथ पुनरुत्तरां जुहूं कृत्वेति सूत्रा-
रम्भे सति कर्मार्थस्रुगादानादन्यदेतदिति ज्ञापितं भवति । ननु
पारिभाषिकस्य सर्वार्थता कथमवगम्यते । उच्यते । वाक्यस्या-
शेषविषयत्वात् । इत्थमेव कुर्यादुभाभ्यामेव पाणिभ्यां जुहूं परि-
गृह्योपभृत्यधिनिदध्यादिति । इदं तूत्तराघारावान्तरप्रकरणात्तदर्थमि-
ति निरवद्यम् । दक्षिणातिक्रामत्यङ्घ्रिणा विष्णवित्यनेन मन्त्रेण
यजतिस्थानं प्रतिगमने मन्त्रः । अयमपि चोत्तराघारार्थगमनवि-
षयावान्तरप्रकरणादेव ॥ १६ ॥

१परिधीनपरेण सञ्चरो होष्यतः ॥ १७ ॥

---

१ परिधीनां पश्चात्स्रुचां पूर्वेण होमं करिष्यतो ऽध्वर्योर्गमना-
गमनमार्गः सञ्चरः ।

इति । अपरेणेति तृतीया । न हि एनत् प्रत्ययोत्र एनवन्यतरस्यामदूरे पञ्चम्या इति । सर्वार्थं होष्यत इति सम्बन्धात् ॥ १७ ॥

सव्येनेतो दक्षिणेनामुतो ॥ १८ ॥

गच्छतीत्यध्याहारः । इतो गच्छन्यजति स्थानं सव्येन गच्छति अमुत आगच्छन् दक्षिणेनेति । न च सव्यदक्षिणयोरितरेतरनिरपेक्षयोर्गमनसामर्थ्यमस्ति । तेन प्रवृत्त्युपलक्षणार्थं वचनम् । एतदपि सर्वार्थमेवाविशेषविधानसामर्थ्यात् । अथातोतिक्रमणस्यैवेति हि प्रकृत्य य आश्रावयिष्यन्सव्येनातिक्रामति दक्षिणेनाश्राव्येति । ननु चैवं सति आश्रावणविशिष्टएवातिक्रमणे सव्येतरपादनियमो भवति न सर्वत्र । ततश्चोत्तराघारे न भवति । अत्रोच्यते । अतिक्रमणं हि प्रकृत्य सव्येतरपादनियमाभिधानम् । तस्मिंश्चाश्रावणेन विशेष्यमाणे विशिष्टानुवादलक्षणोवाक्यभेदः प्रसज्यते ऽतः सर्वार्थतेत्युक्तम् । अत एव सूत्र कारेणेहोपनिबद्धम् । आह च । आश्रावणविशिष्टे तु नियमो यद्ययं भवेत् । विशिष्टस्यानुवादत्वाद्वाक्यभेदः प्रसज्यते । तस्मात्सर्वार्थतैव ॥ १८ ॥

वसुमतीमित्यवस्थायेत इन्द्र इति जुहोत्युत्तराघारम् ॥ १९ ॥

अवस्थानवचनमुपवेशननिषेधार्थम् । जुहोतित्वादुध्युपवेशनं प्राप्नोति । अतो वचनात्तिष्ठति क्रियोच्यते । तिष्ठं स्तमाघारयति यं वा व आघारयतीति श्रूयते । अत एव च दर्विहोमेष्वपि तिष्ठतैवोत्तराघारआघार्यते । मन्त्रवर्णाच्चेन्द्रोदेवता ततश्च दार्विहोमेष्विन्द्राय स्वाहेति होमः । दक्षिणतश्च होमोस्य दक्षिणतस्तिष्ठन्नाघारयतीति वचनात् । पूर्वाघारे तु जुहोति स्थानादेवोत्तरत आघारणं सिद्धम् । आघारौ प्रकृत्य स यदुभयत आघारयतीति हि श्रूयते । स चायं पदार्थत्वाद्यावदुक्ते निवर्त्तते । प्रयाजार्थद्रव्येण वचनसामर्थ्यात्क्रियते । चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्यत्रिरितः प्राचीनं प्रयाजान्यजतीति । प्रयाजार्थता चास्य वाचनिकी । स यच्चतुर्जुह्वां गृह्णाति प्रयाजेभ्यो हि तद्गृह्णातीति । एवं

च प्रयाजार्थद्रव्याभावे ऽवश्यकर्त्तव्यत्वादाघारस्य स्थाल्यादे
गृहीतेन निर्वर्त्यते । यथा दार्विहोमेषु ॥ १९ ॥

आघार्यासंस्पर्शयन् स्रुचावेत्य जुह्वा ध्रुवां
समनक्ति संज्योतिषेति ॥ २० ॥

जुहोत्युत्तराघारमिति क्रियानिर्देशादवाच्यमाघार्येति । उ
ते । ऋज्वाद्यर्थोयमारम्भः । श्रूयते हि जुमाघारयति तथा सन्त
दीर्घं प्राञ्चमिति । असंस्पर्शयन्नसंलागयन् स्रुचावेत्य यर्जात स
नात् जुह्वा ध्रुवां समनक्ति संज्योतिषेत्यनेन मन्त्रेण । गच्छन्त
त्यध्याहारः । यद्यपि जुह्वा श्रूयते तथाप्यञ्जनक्रियोपदेशसामर्थ्य
ज्जौहवपरतैव न्याय्या । ननु चैवं सति जौहवेनानक्तीति सूत्र
रब्धव्यम । नेत्याह । तथा च सति स्रुवस्य करणता स्यात् ।
पुनर्जुह्वेत्युक्तं तस्याएव करणतेति साधूक्तम् । स चायं ध्रुवासंस्
रोप्युत्तराघारे सति प्रवर्त्तते । एवं ह्याह । शिरो वै यज्ञस्यो
आघार आत्मा वै ध्रुवा तदात्मन्येवैतद्यज्ञस्य शिरः प्रति
धातीति ॥ २० ॥

निधायेध्मसन्नहनान्यादाय ओश्रावयेत्याह ॥ २१ ॥

निधाय स्रुचाविध्मसन्नहनानि गृहीत्वोश्रावयेत्येवमाह
स्रुङ्निधानं च वाचनिकम । इतरथा हि युक्तयोराप्रयोजनाभिनिर्वृ
र्त्तेरविमोकः स्यात् । एवं च सति स्विष्टकृदन्तेपि निधानोपदेश उपप
ते । निधाय सञ्चरमभ्युक्ष्य प्राशित्रमवद्यतीति ॥ २१ ॥

अस्तु श्रौषडित्यग्नीत् ॥ २२ ॥

अस्तु श्रौषडित्येवं पुनरग्नीदाह ॥ २२ ॥

वेदिबर्हिरिध्मशकलमपच्छिद्यैके ॥ २३ ॥

आश्रावणं कुर्वन्ति । एवं ह्यत्र वचनम् । तद्धैके वेदं स्तीर्णं
बर्हिरभिपद्याश्रावयन्तीध्मस्य वा शकलमपच्छिद्याभिपद्याश्रावयन्
ति । एवं च इध्मशकलस्यापच्छेदो बर्हिषस्त्वभिपत्तिमात्रमेव ॥२३॥

एवं सर्वत्राश्रुतप्रत्याश्रुतेषु ॥ २४ ॥

उपग्रहद्रव्याणीति केचित् । तदयुक्तम् । न ह्याश्रावणमात्रे विधानमेषामिति । होतृवरणे तु विधानमेषाम् । इदं वै किञ्चिद्यज्ञस्येदं यज्ञमभिपद्यथ होतारं प्रवृणा इति । तस्मादेवं सर्वत्राश्रावणेध्वर्युः प्रत्याश्रावणे चाग्नीदिति । तथा च लिङ्गमाश्रावयत्यध्वर्युस्तदग्नीधं यज्ञ उपावर्त्तते सोग्नीन्नापव्याहरेदाप्रत्याश्रावणात् । प्रत्याश्रावयत्यग्नीत्तत्पुनरध्वर्यु यज्ञ उपावर्त्तत इति अध्वर्य्वग्नीधोराश्रुतप्रत्याश्रुते दर्शयति ॥ २४ ॥

अथ प्रवृणीतेग्निर्देवो दैव्यो हेता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्यवद्भरतवत् ॥ २५ ॥

अथेत्यवाच्यं पाठादेव तदर्थप्राप्तेः । तेन वरणे यजमानस्य प्राप्तत्वादध्वर्य्वर्थोयमथ शब्द इति केचित् । तदेतदनुपपन्नम् । आनत्यर्थे हि वरणे यजमानः परिभाषितो नादृष्टसंस्कारर्थे । न चैतदानत्यर्थम् । प्रवृत्तत्वाद्धोतुः । अतो यजमानस्याप्रवृत्तिरेव । अथ शब्दप्रयोगस्तर्हि किमर्थः । इध्मसन्नहनादि गृहीत्वाश्रवणं कृतम् । तच्च तावन्मात्र एव माभूत् । अत उपग्रहद्रव्यस्योत्तरत्रानुकर्षणार्थोऽथ शब्दः । अथ प्रवृणीते गृहीतेनैवेध्मसन्नहनादिना प्रवृणीते इत्येतदुक्तं भवति । तदर्थमेव ह्युपग्रहद्रव्यं श्रूयते । इदं वै किञ्चिद्यज्ञस्येदं यज्ञमभिपद्याथ होतारं प्रवृणा इति । अथ वा श्रुतप्रत्याश्रुतयोः वरणार्थत्वज्ञापनायाथ शब्दः । स वै प्रवरायाश्रावयतीति हि श्रूयते । अग्निर्देवो दैव्य इति देवताग्नेरभिधानं स्यात्प्रकृतत्वात् । न वा सविशेषणत्वात् । होतृपदोपसंहितो ह्ययमग्निशब्दः । तेन स्विष्टकृदग्न्यभिधायकः स्यात् । दृश्यते हि तत्र होतृपदोपसन्नहनमावाहने प्रयाजाज्यभागप्रधानदेवतासङ्कीर्त्तनोत्तरकालम् । अग्निं होत्रायावहेति तदाग्निं होत्रायावोढवा आहेति । तथा स्विष्टकृति यक्षदग्नेर्होतुः प्रियाधामानीति प्रकृत्याह । तदस्मा एतां देवा आहुतिं कल्पयित्वा थैनेनैतद्भूयः समशाम्यन्निति स्विष्टकृदग्नेर्ह्याहुतिः परिकल्पिता । अतो होतृतदोपसंहितः स्विष्टकृदग्निः । तथा सूक्तवाके अग्निर्होत्रेणादं हविरजुषतावीवृधतेति । तदेतन्नोपपद्यते । स्विष्टकृदग्नेरप्रकृ-

तत्वात् । न हि स्विष्टकृन्मन्त्रोयम् । किं च होतृसंस्काराभिप्र
तेनाग्निर्देवो दैव्यो होता स होतर्यध्यारोप्यते तदभिष्टवाय ॥
प्रकृतवस्त्वभिधायकत्वं मन्त्रस्याभ्युपगतं भवति । इतरथा ह्यप्र
वस्त्वन्तरार्थता प्रकृतवस्त्वभिधायकत्वैकवाक्यत्वे सत्ययुक्ताप
किं च एकवाक्यतानुपपत्तेः । न ह्यग्न्यभिधायकत्वे एकवाक्य
पपद्यते । देवान्यक्षद्विद्वांश्चिकित्वानिति प्रकृत्य भरतवदित्याह
रतश्चाग्निरभिधीयते । एष हि देवेभ्यो हव्यं भरतीति । न चाग्नि
दग्नेर्यष्टृत्वं सम्भवति । होतुस्तु सम्भवत्यग्निवद्यष्टृत्वम् । तेना
भिधायकत्वे भरतवदिति दृष्टान्तानुपपत्तिः । किं च ब्रह्मण्वा
च नोपपद्यते । उक्तेनैव न्यायेन ब्रह्म ह्यग्निरित्याह । एवं सति
पदानां सामञ्जस्येनैकवाक्यता । तस्मान्न स्विष्टकृदग्न्यभिधान
मिदमुच्चारणमिति । चिन्तायाः प्रयोजनं प्रधानदेवताभिधाय
आग्नेयविकारे सौर्यादौ विपरिणामः । स्विष्टकृदग्न्यभिधायक
ऽवभृथेष्टयाम् । अस्मदभिप्राये त्वविकृत एव सर्वत्र प्रयुज्यते ॥ २

अमुवदमुवदिति यजमानार्षेयाण्याह परस्ता-
दर्वाञ्चि त्रीणि ॥ २६ ॥

अमुवदिति आर्षेयोच्चारणम् । त्रीणीति कुतः । त्रीन्वृणीत
वचनात् । इदं हि पितैवाग्रेथ पुत्रोथ पौत्र इति लिङ्गात् । यजमा
ग्रहणं च ऋत्विगार्षेयव्युदासार्थम् ॥ २६ ॥

यावन्तो वा मन्त्रकृतः ॥ २७ ॥

वा शब्दः पक्षान्तरपरिग्रहे । यावन्तो वा मन्त्रकृतस्ताव
नियमेनैव । यावन्तिं यस्य प्राप्नुवन्ति तावन्तिं प्रवृणीते न त्रीन्
ति । तत्कथं आर्षेयं प्रवृणीत इत्येषोत्र विधिः । एकं वृणीते
वृणीते त्रीन् वृणीत इत्यनुवादः । तथा न च तुरो वृणीते न
श्चातिवृणीत इति । आर्षेयाणि ह्येकत्वद्वित्वत्रित्वपञ्चत्वपरिच्छिन्न
नि प्रावरिकायां पठ्यन्ते । तेनार्षेयं वृणीत इतीयतैव यावन्ति
प्राप्नुव[illegible] तावन्त्येव व्रियन्ते । त्रित्वविधानं तु केवलमेकत्वद्वि

योरवयुत्यवादसम्भवमात्रादेवाभ्युपेयते[1] । मन्त्रकृतो मन्त्रदृश उच्यन्ते । न हि मन्त्राणां करणं भवति । अनित्यत्वप्रसङ्गात् । तेन दर्शनार्थः कृञिति व्यवसीयते । दृश्यते चानेकार्थता धातूनाम् । गन्धनावक्षेपण सेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञ इति आत्मनेपदप्रतिपादने गन्धनादीनर्थान् कृञो दर्शयति ॥ २७ ॥

[2]पुरोहितार्षेयेण वा ॥ २८ ॥

तच्चैतद्राजविषयम् । पुरोहितोपपत्तेः । तथाचोत्तरसूत्रम् ॥२८॥

क्षत्रियवैश्ययोश्च नित्यम् ॥ २९ ॥

क्षत्रियोभिषेकक्रियारहितोभिप्रेतोधस्तनसूत्रारम्भवैयर्थ्यप्रसङ्गात् । अनयोर्नित्यं पुरोहितार्षेयोच्चारणं, राज्ञस्तु विकल्पः ॥ २९ ॥

मनुवदिति वा सर्वेषाम् ॥ ३० ॥

ब्राह्मणादीनां मनुवदिति प्रवरणम् । तच्च सकृदेवाभ्यासेकारणाभावात्[3] । यच्चोक्तमिदं हि पितैवाग्रेथ पुत्रोथ पौत्र इति तत्प्रदर्शनार्थम् ॥ ३० ॥

[4]ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रा-

---

१ अत्र ' ऊर्ध्वज्ञुमासीनः होतारं वृणीते मनुष्ववद्भरतवदमुवदिति यथार्षेयो यजमानस्त्रीण्यथ ऽऋषि मन्त्रकृतो वृणीते ऽपि वा एकं द्वौ त्रीन् पञ्च न पञ्चातिवृणीते ' इत्यापस्तम्बवचनमप्यनुकूलम् ।

२ राज्ञो यजमानस्य पुरोहितार्षेयाणि स्वकीयानि वा वृणीत इत्यर्थः ।

३ आपस्तम्बः ' पुरोहितस्य प्रवरेण राजा वृणीते ' इति, ' अपि वा नार्षेयं वृणीते मनुवदित्येवं ब्रूयात् ' इति च । मनुः 'यद्यब्राह्मणोयजेत पुरोहितस्य प्रवरेण प्रवृणीयात् ' इति ।

४ आर्षेयो च्चारणादनन्तरं ब्रह्मण्वदित्यादिकं मन्त्रशेषं ब्रूयात् । तदन्तेऽसौ मानुष इत्यत्रासावित्यस्य पदस्य स्थाने अमुकशर्मेति होतुर्नाम ग्रहणं कुर्यात् ।

२५

वितारोऽसौ मानुष इति होतृनामग्रहणम् ॥ ३१

ब्रह्मण्वदित्यारभ्य होतृनामग्रहणान्तो मन्त्रः ॥ ३१ ॥

उपांशु वा ॥ ३२ ॥

होतृनामग्रहणं भवति । एवमपि हि श्रूयते । तच्चैतद्धोतृ-णमदृष्टसंस्कारस्तथा च यावदुक्तेपि प्रवर्त्तते ॥ ३२ ॥

सम्मृष्टा उपविशतः ॥ ३३ ॥

अथाध्वर्युं चाग्नीधं च सम्मृशतीति सम्मर्शनविधाना-तावेवोपविशतः सन्निधानात् ॥ ३३ ॥

अग्निर्होतेति स्रुगादापनं प्रयाजेषु सन्निधेः ॥ ३४

स्रुगादापनविधानसामर्थ्यात् । १सर्वत्र परिप्राप्ताविदमुक्तं सन्निधानात्प्रयाजार्थस्रुगादापनविषयतैवास्य वाक्यस्य । एवं सति पशावेकादशप्रयाजोत्कर्षे पुनरुच्चारणम् ॥ ३४ ॥

घृतवतीमित्युक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधो यजेति पञ्च प्रयाजान्समिद्धतमे ॥ ३५

घृतवतीमित्यस्मिन्सकले मन्त्रवाक्ये उक्ते स्रुचौ गृही-तिक्रम्याश्रावयति । ततश्च पुरोनुवाक्याभावः । अथ यदपुरोनुवा-क्याः प्रयाजा भवन्तीति श्रूयते । पञ्चग्रहणं कर्मभेदज्ञापनार्थम् । होतानि कर्माणि । समिद्धहोमेन ह्येवसमृद्धा आहुतय इति व-समिद्धतम इत्युक्तम् ॥ ३५ ॥

यज यजेति शेषम् ॥ ३६ ॥

समिधो यजेति हि प्रथममुक्तम् । शेषं यज यजेत्येव व-म् । अथ यज यजेत्येवोत्तरानाहेति वचनात् ॥ ३६ ॥

---

१ अन्वर्थसंज्ञाविज्ञानात् सर्वत्र प्राप्नोति तेन प्रयाजेष्विति -ध्यते ; समाख्यातः सन्निधेर्बलवत्वादित्याशयः ।

१ध्रुवस्तिष्ठन् ॥ ३७ ॥

इति वचनम् । अभिक्रमणमुत्तरसूत्रे वक्ष्यति ॥ ३७ ॥

२पूर्वं पूर्वं वाभिक्रामम् ॥ ३८ ॥

णमुलयं ततश्चाभिक्रम्याभिक्रम्येति द्रष्टव्यम् । तस्मादभितरामभितरामेव क्रामेदभितरामभितरामाहुतीर्जुहुयादिति । तेन ध्रुवपक्षे समिद्धतमे, अभिक्रमणपक्षे पूर्वं पूर्वमिति ॥ ३८ ॥

उपभृतो जुह्वामानयत्यनवमृशंश्चतुर्थम् ॥ ३९ ॥

चतुर्थं प्रयाजं प्रति उपभृतो जुह्वामानयति । तच्चानवमृशन् स्रुचौ । स वा अनवमृशन्समानयतीति ३ ॥ ३९ ॥

अधिकारमुपजीवन्नाह--

एवं प्रवृद्धौ ॥ ४० ॥

प्रयाजप्रवृद्धौ चतुर्थे चतुर्थे समानयति४ ॥ ४० ॥

अनुयाजेषु ॥ ४१ ॥

नैवमेव प्रतिपत्तव्यम् ॥ ४१ ॥

---

१ एकस्मिन् स्थाने स्तम्भ इव तिष्ठन् पञ्च प्रायाजान् यजति, अपक्रमणकारणे सत्यपि नापक्रामेदिति भावः । अत्र 'सर्वान्वैकध्यम्' इत्यापस्तम्बसूत्रमुपोद्बलकम् ।

२ अभिक्रम्याभिक्रम्याहवनीयसंमुखं गमनं कृत्वा पूर्वं पूर्वं प्राक्संस्थपङ्क्त्या पञ्चापि प्रयाजान् पृथक् पृथक् स्थाने जुहोतीत्यर्थः । 'पञ्च प्रयाजान् प्राचः प्रति दिशं वा, सामिधः पुरस्तात्तनूनपातं दक्षिणात इडः पश्चाद्बर्हिरुत्तरतः स्वाहाकारं मध्ये' इत्यापस्तम्बसूत्रे ।

३ आपस्तम्बः 'त्रीनिष्ट्वार्धमौपभृतस्य जुह्वामानीय प्रत्याक्रम्य शेषेण ध्रुवामभिघार्यानुपूर्वं हवींष्यभिघारयन्त्युपभृतमन्तत' इति ।

४ अत एव 'चतुर्थसप्तमदशमेषु समानयन्ति' इति याज्ञिकोक्तिः ।

उत्तरां जुहूमध्युह्य प्राचीमवहृत्य जुहोति ॥ ४२ ॥

उत्तरैव जुहूरित्यवाच्यं उत्तरामिति । तेनोत्तरां प्राची... हृत्येति सम्बन्धः । इत्थमेव कुर्यात् प्राचीमेव स्रुचमुपावहृत्ये... श्रूयते। अध्युह्याध्युह्य जुहोति न सकृदवतारितया । हुत्वा तेनैवा... त्योपभृत्यधिनिदध्यादिति वचनात् ॥ ४२ ॥

एवं सर्वत्र ॥ ४३ ॥

न प्रयाजमात्र एवैतत् । न हि प्रयाजान् प्रकृत्य श्रूयते इ... होममात्रोद्देशेन च श्रवणम् । अथ तौ होमस्यैवेति प्रकृत्यैतच्च... यत इति ॥ ४३ ॥

नाभिदेशे धारणम् ॥ ४४ ॥

प्रकृतयोर्जुहूपभृतोः। अथातो धारणस्यैवेति हि प्रकृत्यामनन्ति। ... हैष मध्यमः प्राणस्तस्मादुतमुपन्यञ्च्यवैवे धारयेदिति। सर्वत्र शब्दश्चा... वर्त्तते। तथा च सर्वविषयमेतद्धारणं भवति न प्रयाजेष्वेव । ... नारभ्य ह्येतत्पठ्यते ॥ ४४ ॥

प्रयाजानुमन्त्रणमेको ममैका तस्य योस्मां-
द्वेष्टि यं च वयं द्विष्म इति ॥ ४५ ॥

प्रयाजे इष्टे सत्यनुमन्त्रणं कर्त्तव्यम् । एको ममेति । त... द्याजमानं अकरणत्वात् । आत्माभिवादिपदसम्बन्धे सत्यप्यार्थि... गाभावात् अनेकयाजमानके कर्मण्यविपरिणामः ॥ ४५ ॥

एवं मिथुनैर्यथासंख्यम् ॥ ४६ ॥

उत्तरत्र यथा संख्यमेवमनुमन्त्रणानि कार्याणि । एवं ह्याम्ना... यते । तस्मात्प्रथमे प्रयाजे इष्टे ब्रूयादेको ममेति, तथा द्वौ ममेति ... तीये प्रयाजे, त्रयो ममेति तृतीये प्रयाजे इत्येवमादि । तदेवमर्थर... लाघविक आचार्यः सूचयत्येवं मिथुनैर्यथा संख्यमिति ॥ ४६ ॥

न तस्य किंचनेति पञ्चमे ॥ ४७ ॥

पञ्च मम न तस्य किं चनेत्येवं पञ्चमे प्रयाजे प्रयोगः ॥ ४७ ॥

त्विषिमानपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नाद इति च ॥ ४८ ॥

एतैश्च यथा संख्यमनुमन्त्रयीत साकाङ्क्षत्वात् । अभूयासमिति प्रतिपदमध्याहारः । स च श्रुतावभिहित एव । प्रथमं प्रयाजमनुमन्त्रयेत् त्विषिमान् भूयासमिति । पूर्वस्माच्चैतदनुमन्त्रणं भिद्यते । पृथग्विधानसामर्थ्यात् । प्रयोजनं संहितावत्प्रयोगः । त्विषिमान्भूयासमित्येवमाद्याशीर्योगसामर्थ्यादनेकयजमानके विपरिणस्यते । अनुमन्त्रणस्य चासन्निपातात्प्रोषितोपि यजमानः करोति ॥ ४८ ॥

आगन्तूनां चतुर्थपञ्चमाभ्यां स्थानात् ॥ ४९ ॥

नव प्रयाजान्यजतीत्येवमादौ प्रयाजधर्मपरिप्राप्तौ सन्देहे इदमारभ्यते । आगन्तूनां चतुर्थपञ्चमाभ्यां यो धर्मः प्राप्तस्तेन सम्बन्धं कुर्यात् । स चानुमन्त्रणस्थानादिकः । कुत एतत् । स्थानात् । क्रमादित्यर्थः । चतुर्थपञ्चमयोर्ह्यन्तराले आगन्तवः पठ्यन्ते । अतश्च सन्निधानात्तद्धर्मसम्बन्ध इष्यते । धर्मापेक्षायां हि सन्निहितव्यतिक्रमे कारणं नास्ति ॥ ४९ ॥

प्रथमचतुर्थाभ्यां वा यथालिङ्गम् ॥ ५० ॥

प्रथमचतुर्थयोर्वा धर्मेण सम्बन्धः कर्त्तव्यो लिङ्गात् । यो बहुदेवत्यस्तस्य प्रथमधर्म य एकदेवत्यस्तस्य चतुर्थधर्मः इति । लिङ्गं ह्यत्र पर्युपस्थापकम् । ननु चैवं सतिद्वितीयतृतीययोरप्यविशेषाद्धर्मप्रवृत्त्या भावितव्यम् । नेत्युच्यते । प्रथमचतुर्थयोर्हि कारणमन्यदप्यस्ति । एकत्र प्राथम्यमितरत्रानन्तर्यम् ॥ ५० ॥

१सर्वान्वोत्तमेनोपायित्वात् ॥ ५१ ॥

अथ वा उत्तमधर्मेण सर्वान् सम्बध्नीयात । कुत एतत् । उपायित्वात् । तमेव पञ्चमं होतव्यं प्रति तत्साकल्यसञ्जननाय उपायिन

---

१ सिद्धान्तमाह ।

आगन्तवः । कथमवगम्यते । येन नव प्रयाजान्यजतीत्यत्राभ्या
संख्यापूरयितव्या । न हि नवैतानि कर्माणि । उत्पन्नसंयोगात्संख्या
एवं च सति न्यायादन्त्यस्याभ्यासः प्राप्नोति । न हि पूर्वाभ्यासो
ज्यत इत्यन्त्यस्याभ्यासोयम् । तेन पञ्चमधर्मसम्बन्ध ए
युज्यते१ ॥ ५१ ॥

## एत्य जुह्वाभिघारणं ध्रुवाया हविष उप-
## भृतश्च ॥ ५२ ॥

सन्निधानाद्यजति स्थानस्थितस्यैवाभिघारणं मा भूदित्यत
त्येत्युच्यते । ध्रुवादीनामुच्चारणं स्थाल्यादिव्युदासार्थम् । तत्कथं, ना
स्थाल्यामभिघारणस्य प्राप्तिरस्ति । उत्तमप्रयाजसङ्कीर्तितदेवता
म्बद्धहविरभिघारणमत्रेष्यते । तच्च ध्रौवं पुरोडाशावौपभृतं च ।
ह्यत्र वाक्यशेषस्तु उत्तमे प्रयाजे स्वाहाकारेणैव सर्वं यज्ञं समस्था
यन्निति प्रकृत्याग्न्यादयः सङ्कीर्त्तिताः । ततश्चात्रैव सर्वयागपरि
माप्त्यायातयामानि हवींषि संवृत्तानीति । पुनराह ते देवा अकाम
कथं त्विमं यज्ञं पुनराप्याययेमेति प्रकृत्य स यज्जुह्वामाज्यं परिशि
मासीद्येन यज्ञं समस्थापयंस्तेनैव यथापूर्वं हवींष्यभ्यघारयन्निति ।
तच्च स्थाल्या अनभिघारणम् । हविः शब्दश्चात्र गोबलीवर्दन्यायेन
रोडाशयोर्वर्त्तते । अत्रैतद्विचार्यते । किं हविः संस्कारोयमुत प्रया
षप्रतिपत्तिः? किं तावत् प्राप्तम् । हविः संस्कारोयं द्वितीया निर्दे
द्रव्ये च तृतीया श्रूयते । प्रयाजशेषेण हवींष्यभिघारयति । लि
च्च । पुनरेवैतानि तदाप्याययत्ययातयामानि करोतीति । प्रय
शेषप्रतिपत्तिर्वा दृष्टार्थत्वात् । दृष्टो ह्यत्रार्थो जुह्वारिक्तता
तया ह्याज्यभागाविज्येते । अतस्तद्द्रव्यसंसर्गाभावे दृष्ट
ता । इतरथा हि हविरभिघारणाददृष्टं कल्प्येत । तच्चान्याय्यं

---

१ एवं च नवैकादशप्रयाजादावपि 'पञ्चमम न तस्य कि
योस्मान् द्वेष्टि यञ्च वयं द्विष्मः अन्नादो भूयासम' इत्येवानुमन्त्रण
अत्र तनूनपान्नाराशंसयोर्विकल्पः, शतपथे विशेषाश्रवणेपि शा
न्तरं विशेषश्रुतेः ।

ष्टे सति । यदुक्तं हविषि द्वितीया द्रव्ये च तृतीया । तत्रापि वस्तुबला त्तृतीया द्वितीयार्थे, द्वितीया च सप्तम्यर्थे, सुपां सुपो भवन्तीति । लिङ्गं त्वर्थवादप्रायम । चिन्तायाः प्रयोजनम् । हविः संस्कारे पशुपुरोडाशाभिघारणार्थः प्रयाजशेषः स्थापयितव्यः । शेषप्रतिपत्तौ सन्निहितेष्वेव कार्यं इति ॥ ५२ ॥

आज्यभागाभ्यां चरत्याग्नेयेन सौम्येन ॥ ५३ ॥

आज्यभागाविति कर्मणोः संज्ञा । असौ च संव्यवहारार्था आज्यभागप्रभृतीडान्त्यमेक इत्येवमाद्यर्था । ताभ्यां चरति । चरति रनुष्ठानार्थः । तावनुतिष्ठतीत्यर्थः । स चैक आग्नेयोऽपरः सौम्यः । अग्निर्देवत्य आग्नेयः । सोमदेवत्यश्च सौम्यः । स्मर्यते हि देवता तद्धितोऽग्नेर्ढक् सोमाद्यणिति च । आग्नेयमस्मिन् कर्मणि द्रव्यमित्याग्नेयः । एवं सौम्यः ॥ ५३ ॥

चतुरवत्तं सवषट्कारासु ॥ ५४ ॥

सवषट्कारास्वाहुतिषु चतुरवत्तं होतव्यम् । चतुरवत्तं जुहोतीति हि श्रूयते ॥ ५४ ॥

अनिधायावदायावदाय ध्रुवामभिघारयति, आप्ययतां ध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः सूर्यायाऊधो अदित्या उपस्थ ऊरुधारा यज्ञे अस्मिन्निति ॥ ५५ ॥

अनेन मन्त्रेण । अनिधाय स्रुचावित्युच्यते । वाचनिको हि तयोर्विमोकः । ते एतच्छिष्टकृति विमोचनमागच्छत इत्यादि । अवदायावदायेति वीप्सा प्रति स्रुवविषया । चतुरवत्तविषयत्वे ह्यनुपपत्तिः । आहवनीययजतयो ध्रुवाया इति परिभाषितम् । अतस्तदभिघारणमुच्यते । आज्यभागयोर्यजति त्वाद्याज्यापुरोनुवाक्यावत्वम् । अनुवाक्या च प्रेषितेनानूच्यते । तत्रैतत्सन्दिह्यते । किमवदानोत्तरकालमनुवाचनमुत सहाहोस्वित्पूर्वमिति? । न चेहाचार्येण वि-

शेषः प्रदर्शितः । किं तु विकृतावनुप्रवृत्तिर्दृश्यते । पशौ गृहीत्वानु- चनम् । तत्पुरोडाशे च सहानुवाचनम् । अवद्यन्त हीन्द्राग्नि- मिति । क्वचिच्च पूर्वानुवाचनम् । यथावरुणप्रघासेषु मारुत्यां, व्येन स्रुचौ गृहीत्वेति । तत्र पूर्वानुवाचनमेवयुज्यते । त हि विकृत्यनुप्रवृत्तिदर्शनं मारुत्यामित्युक्तम् । नन्वितरयोरप्यनि सत्यमेवम् । तत्तु वाचनिकम् । अस्यापि वाचनिकत्वमिति चेत न वचनस्यान्यपरत्वात् । वास आलम्भोऽत्र विधीयते । स वा- प्तस्तस्मात्पूर्वानुवाचनं प्रकृतितः प्राप्तमेवानूद्यत इति । पशुपुरो- शादौ त्वनन्यपरत्वात् वचनस्य सहानुवचनादि परतैव । तस्म- त्पूर्वमनुवचनम् । ततोवदानं । पुनरतिक्रम्य प्रवचनमिति । - दपि प्रदर्शितमाचार्येणातिक्रम्याश्राव्याह समिधो यजेत्येवमा- [1]सर्वयजतिष्वेष क्रम इति ॥ ५५ ॥

अनुब्रूहीत्युक्त्वा नापव्याहरेद्धोता चाश्राव- णात् ॥ ५६ ॥

अनुवचनोत्तरकालमध्वर्युर्नापव्याहरेत्, होता चाश्राव- शावत् ॥ ५६ ॥

[2]आश्राविते‍ग्नीदाप्रत्याश्रावणात् ॥ ५७ ॥

प्रत्याश्रावणमस्तु श्रौषडिति । आ तत इत्येतदुक्तं भवति ।

---

१ आपस्तम्बः ‘ आग्नेयः सौम्यश्चाज्यहविषा चाज्यभागौ चतु- हीताभ्यां जमदग्नीनां तु पञ्चावत्ताभ्यामथ जामदग्न्यो जामदग्न्य- मामन्त्र्य पञ्चावत्तं कुर्विति सर्वत्रावद्यन्नमुष्मै अनुब्रूहीति पुरोनु- क्यां सम्प्रेषयत्यवदायावदाय स्रुवेण प्रस्तरबर्हिः समज्य जुहूप- तावादाय दक्षिणातिक्रम्याश्राव्य प्रत्याश्राविते‌ऽमुं यजेति याज्यामि- सार्वत्रिकम ’ इति ।

२ अध्वर्युणा आश्रावणे कृते आ प्रत्याश्रावणमग्नीन्नापव्याह- रेत् । ‘ ओश्रावय ’ ‘ अस्तु श्रौषड् ’ इत्यनयोरन्तरा नापव्याहरण- ग्नीध इति ।

प्रत्याश्रावितेध्वर्युराहोतृप्रैषात् ॥ ५८ ॥

यजेति होतृप्रैषः, आ ततो नापव्याहरेदिति ॥ ५८ ॥

होता वषट्कारात् ॥ ५९ ॥

नापव्याहरेदिति वर्त्तते । सोनुब्रूहीत्येवोक्त्वाध्वर्युर्नापव्याहरेदिति प्रक्रम्यैतच्छ्रूयते ॥ ५९ ॥

सोमे च ग्रहं गृहीत्वोपाकरणात् ॥ ६० ॥

सोमे चाध्वर्युर्ग्रहं गृहीत्वा नापव्याहरेदास्तोत्रोपाकरणात् ॥६०॥

उपाकृत उद्गातार आ होतृप्रैषात् ॥ ६१ ॥

उपाकृते स्तोत्रे उद्गातारो नापव्याहरेयुराहोतृप्रैषात् । होतृप्रैष उत्तमस्तोत्रीयायाः प्रस्तावसमनन्तरं एषोत्तमेति येन होता सम्बोध्यते ॥ ६१ ॥

[1]होता वषट्कारात् ॥ ६२ ॥

नापव्याहरेदिति वर्त्तते । कियन्तं कालम् । आ ग्रहसम्बद्धहोमवषट्कारात् । अथ सौम्येध्वरे स वै ग्रहं गृहीत्वाध्वर्युर्नापव्याहरेदिति प्रकृत्यैतदपि हि श्रूयते ॥ ६२ ॥

आग्नेयमुत्तरापूर्वार्द्धे दक्षिणपूर्वार्द्धे सौम्यम् ॥६३॥

आग्नेयमाज्यभागमुत्तरपूर्वार्द्धे जुहोति।दक्षिणपूर्वार्द्धे सौम्यं ॥६३॥

समिद्धतमे वा ॥ ६४ ॥

उत्तरार्द्धपूर्वार्द्धे हैकं आग्नेयमाज्यभागं जुह्वतीति प्रक्रम्यैतच्छ्रूयते ॥ ६४ ॥

हविर्भ्यां च ६५ ॥

---

१ सूत्रे होतृग्रहणं सकलशस्त्रकर्तॄणामुपलक्षकम्, तेन प्रशास्त्रादयोपि एषोत्तमेति प्रैषोत्तरं शस्त्रव्यतिरिक्तं किमपि न ब्रूयुः ।

२६

चरतीति वाक्यशेषः । समिद्धतम इति च । समिद्ध
ह्येव समृद्धा आहुतय इति श्रूयते ॥ ६५ ॥

पुरोडाशावन्तरेणाग्नीषोमा उपांश्वाज्यस्य ॥ ६६

पुरोडाशयागयोर्मध्ये उपांश्वाज्यस्याग्नीषोमौ यजति ॥
पुरोडाशाविति द्वितीयोपपदविभक्तिः१ ॥ ६६ ॥

विष्णुर्वामावास्यायां हौत्राम्नानात् ॥ ६७ ॥

अमावास्यायां विष्णुर्वेज्यते अग्नीषोमौ वा । एवं हि हौत्रे
म्नायते । वैष्णवश्चेदिदं विष्णुरिति२ ॥ ६७ ॥

यावद्धविरुत्तरार्द्धात्स्विष्टकृत् ॥ ६८ ॥

यावन्ति हवींषि सर्वेषामुत्तरार्द्धात्स्विष्टकृदिज्यते । स
तिपन्नदेवतैकत्वाच्च सकृत्प्रक्षेपः । प्रतिपत्त्यर्थकर्म चैतदुत्तरा
प्रतिपाद्यते । यागश्च निर्वर्त्यते । अत एव च यावदुक्तेपि प्रवर्तते

तत एव होमः ॥ ६९ ॥

---

१ अयं क्रमः, आग्नेय आज्यभागो ध्रुवातश्चतुर्गृहीतेन, सौ
आज्यभागोऽपि, आग्नेयेन पुरोडाशेन यागः तत्राग्नये ऽनुब्रूहील
वाचनम् जुह्वां ध्रुवाया स्रुवेणाज्यं गृहीत्वोपस्तारः, आज्यस्था
सकाशाद्ध्रुवाया अभिघारणम् पुरोडाशमध्यादङ्गुष्ठपर्वमात्रं तिर
नमवदानं ग्राह्यम् द्वितीयं पूर्वार्धात् पश्चावत्तिनस्तृतीयं पश्चा
ध्रौवेणोपर्यभिघारः पुनर्ध्रुवाया आप्यायनम् आज्यस्थाल्याज्येन
त्तस्य हविषोऽवदानयोः प्रत्यभिघारः अतिक्रम्याश्राव्याग्नि यजे
कृत्वा वषट्कृते सह वा स्रुक्पार्श्वेनहोमः, आज्यभागवत् ध्रु
श्चतुः पञ्चकृत्वो वावदायोपांशुयागः, आग्नेययागवत् द्वितीयेन
रोडाशेनाग्नीषोमीययागः स्विष्टकृदिति देवभाष्ये ।

२ व्यवस्थितोऽयं विकल्पः संनयतोऽग्नीषोमौ असंनयतो
ष्णुरिति, शाङ्खायनः 'ऐन्द्रं सान्नाय्यं संनयतो माहेन्द्रं वा; वै
त्वसंनयन्नुपांशुयाजम्, इति ।

उत्तरत एव होमो भवति । शेषात्स्विष्टकृते समवद्यतीत्येतदुक्तम् ॥ ६९ ॥

उपांशुयाजशेषादपि ध्रौवात्स्विष्टकृदवदाने प्राप्त आह—

नाज्यादशेषात् ॥ ७० ॥

न स्विष्टकृदर्थमवदानं ध्रौवादाज्याद्ग्रहीतव्यम् । कुत एतत् । अशेषत्वात् । न ह्येतच्छेषभूतम् । ननूपांशुयाजनिर्वृत्त्युत्तरकालं शेषव्यपदेशोऽस्येति । नेति ब्रूमः । न ह्येतदुपांशुयाजायैव गृह्यते । सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति । न च सर्वार्थस्यैकदेशे निवृत्ते शेषव्यपदेशोऽस्ति[1] ॥ ७० ॥

असंसृष्टामाहुतिभिः ॥ ७१ ॥

स्विष्टकृदाहुतिं जुहोतीति वाक्यशेषः । स वा अभ्यर्द्ध इवेतराभ्य आहुतिभ्यो जुहोतीति प्रक्रम्याह रुद्रियः स्विष्टकृद्रौद्रेयेण ह पशून्प्रसज्येद्यदितराभिराहुतिभिः संसृजेदिति ॥ ७१ ॥

निधाय सञ्चरमभ्युक्ष्य प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वाऽन्यतरत आज्यमुभयतो वाभ्येयात् ॥ ७२ ॥

स्रुग्निधानं वाचनिकम् । ते एतात्स्विष्टकृति विमोचनमागच्छन्त इति । सञ्चरश्च परिधीनपरेण सञ्चरोऽभिप्रेतः । तस्य चाभ्युक्षणा-

१ अपरा व्याख्या । न ह्याज्यं शेषरूपमस्ति शेषस्य हि कृतार्थस्य प्रतिपत्त्यपेक्षस्य स्थितस्य प्रतिपत्त्यर्थानि शेषकार्याणि । न चाज्यमेवं विधमस्ति । न ह्युपांशुयाजार्थं पूर्वं पृथक् प्रकल्पितमस्ति यस्य शेषो भवति । अतः साधारणादेव ध्रौवाद्वचनेनोपांशुयाजार्थं गृह्यते । यत्तावद्ध्रुवायामुपांशुयाजार्थं गृहीतेऽवशिष्टमाज्यम् तत्पश्चाद्व्युपस्तरणाभिघारणाद्युपयोगीत्यकृतार्थं न प्रतिपत्त्यर्हम् । सर्वान्ते च तेन निःशेषेण समिष्टयजुर्हूयत इति न ततः शेषकार्यम् । यज्जुह्वां चतुर्गृहीतं तन्निःशेषं हुतमिति शेषाभावादेव तत्सम्बन्धि कार्यस्याभाव इत्यनन्तदेवाः ।

मनुयाजार्थम् । स्विष्टकृत ऊर्ध्वमनुयाजार्थं ह्यनेन सञ्चरेण सा
णम् । ननु प्राशित्रसमर्पणार्थं कस्मान्न भवति । न, तस्य प
क्रमनेन समर्पणम् । अपाक्षिकं चाभ्युक्षणम् । तेन करिष्य
णप्रयोजनत्वादनुयाजार्थतैव न्याय्या । प्रयोजनं तदभावेऽ
इति । पशौ च त्र्यङ्गस्विष्टकृदुत्तरकालमभ्युक्षणं न पुरोडाशस्वि
तीति । ज्योतिष्टोमे च तृतीयसवने सौम्ययागसमनन्तरमभ्युक्ष
नेतरयोः सवनयोरनुयाजाभावात् । केचित्तु तृतीयसवनेऽपि
ष्टकृद्यागसमनन्तरमेवाभ्युक्षणमिच्छन्ति न सौम्यसमनन्तरम्
दनन्तरमेव दृष्टत्वात् । युक्तरूपतरमिवचैतदिति । प्राशित्र
ब्रह्मणो भागस्तदवद्यति । अवद्यति शब्दोपादानसामर्थ्याद्वि
प्रतिपत्तव्यम् । अवद्यतेर्हिद्विरवदानसम्बन्धो दृष्टः । त्रित्वस
न्धोपीति चेत् । न, विशेषसंयोगात् । त्रिर्जमदग्नीनामिति । त
च प्राशित्रं प्रकृत्य पठ्यते । द्विर्हविषोवद्यतेति । तेन यद्वद
तद्यवमात्रं पिप्पलमात्रं वेति । शाखिनां तु पठ्यते । द्वे शकले
ति यवमात्रे पिप्पलमात्रे वेति । पिप्पलमात्रमिति च पिप्पलफ
भिप्रेतम् । न पिप्पलमात्रेण सहोच्चारणात् । क्वचिच्च दर्शन
थाम्रं वोदुम्बरंवा पिप्पलं वा बन्धनात्प्रमुच्येतेति फलविषय
पिप्पलशब्दः । आज्यं चान्यतरतो भवत्युभयतो वा अन्यतरत
ज्यं कुर्यादधस्ताद्वोपरिष्टाद्वेति वचनात् । तथा स आज्यस्योप
द्विर्हविषोवदायाथोपरिष्टादाज्यस्याभिघारयति । तद्यथैव यज्ञस्याव
नमेवमेवतदिति । आग्नेयान्मस्तकं विरुज्य द्वे शकलेवद्यति यव
पिप्पलमात्रे वेति । वचनमङ्गीकृत्याग्नेयादित्युक्तम् ॥ ७२ ॥

भागांश्च ॥ ७३ ॥

गृह्णातीति सूत्रशेषः । तांश्चाग्नेयादेव प्राशित्रसह चरत
स चायमुपदेशः । क्रमस्तूपरिष्टाद्वक्ष्यते । स्थितं तावदपर्यव
तमन्तरान्यत्प्रक्रियते । तत्किमर्थं चतुर्द्धाकरणसिद्धान्तसमानन्
यतयेति निरवद्यम् ॥ ७३ ॥

अध्वर्युसञ्चरेण ब्रह्मणे प्रदाय पूर्वेणैके
ऽप उपस्पृश्येडां पश्चावत्तां दक्षिणतो म-

ध्याच्च यावद्धविस्स्विष्टकृद्दाज्यम् ॥ ७४ ॥

प्रक्रान्तं प्राशित्रमध्वर्युसञ्चरेण समर्प्य पूर्वेण चाहवनीयं ततोप उपस्पृशति । रुद्रियः प्राशित्रमिति । ततश्च तदभावे न भवति । तत इडां पञ्चावत्तां गृह्णाति । यावद्धविरिति । प्रतिपत्तित्वात् । ननु च दक्षिणतो मध्याच्च स्विष्टकृद्ददाज्यमिति चोक्ते पञ्चावत्तग्रहणमवाच्यम् । सर्वेषां तुल्यत्वप्रज्ञापनायेति केचित् । तदेतदसत् । न हि पुरोडाशस्याज्यस्य च तुल्यता शक्याभ्युपगन्तुम् । प्रतिपाद्यते ह्यत्र पुरोडाशो नाज्यमसंयुक्तविधानात् । तेन पत्नीसंयाजेडायामपि पञ्चावत्तता यथा स्यादिति पञ्चावत्तग्रहणम् । ननु चानुक्तोपि पञ्चावत्तमेवेदम् । ततश्च तत्रापि भविष्यत्येव । नेह पुरोडाशप्राधान्यात्तत्कार्ये च पत्नीसंयाजेष्वाज्यप्रसङ्गाद्द्विरेवाज्यं प्राप्नोति । नोपस्तरणाभिघारणप्राप्तिरिति । तेन सुष्ठूच्यते पञ्चावत्तामिति ॥ ७४ ॥

यजमानभागं पूर्वार्द्धाद्दीर्घं प्रशीर्य पुरस्ताद्ध्रुवायाः करोति ॥ ७५ ॥

पूर्वार्द्धं पुरोडाशस्य प्रशीर्य पुरस्ताद्ध्रुवायै निदधातीति श्रुतत्वात् । अयं च भागानामवसरः । ततश्च विनियोगक्रमेण पूर्वमग्नीधस्ततो ब्रह्मणस्ततो यजमानस्येति । ध्रुवायाः पुरस्तादिति व्यतिरिक्ते देशे करोति ॥ ७५ ॥

इडा१ँ होत्रे प्रदायाविसृजन् दक्षिणातिक्रामति ॥ ७६ ॥

भागैर्व्यवहितत्वादिडाग्रहणं क्रियते । ता१ँ होत्रे प्रदायाविसृजं दक्षिणातिक्रामति ॥ ७६ ॥

इडां प्रतिगृह्य होतुरङ्गुलिपर्वणी अनक्ति ॥ ७७ ॥

प्रकृतत्वादिडाग्रहणमकार्यं क्रियते च पर्वाञ्जनं यथा ततः क्रियेतेत्येवमर्थम् । तथा च दर्शयति । स होतुरिह निलिम्पति तद्धोतोष्ठयोर्निलिम्पत इति प्रकृत्याह एतद्धवै मनुर्बिभयाञ्चकारेदं वै मे तनिष्ठं

